श्रीमहावाण्यै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्यभूमिका ।

अयि!! सकलभाषामातृभूतसंस्कृतमहाभाषामहाकाव्यविलासलालसा विबुधवतंसाः! विदितमेव तत्र भवद्भिरखिलानामपि जगतां मूलप्रकृतिरिव चिच्छक्तिः प्रकृतिभूता सकलानामपि भाषाणां संस्कृता भाषा- विविधविज्ञाननिधिविविधविद्याविविधकलादिगर्भा विविधविश्वव्याप्ता मातृभूता वरीवर्त्तीति । यत्र च सृष्ट्यादौ स्रष्टुराननेभ्यश्चतुर्भ्यश्शब्दब्रह्मात्मिकानन्ता महावेदवाणी विनिर्गता । यत्र च तद्द्रष्टृमहामुनीनां तद्गतविविधांशव्यञ्जनाय विविधास्स्मृतयः पुराणानि तन्त्राणि वाक्यादीनि च प्रादुर्भूतानि; विविधविज्ञानामृतलहरीं दिशन्ति विश्वेभ्यो लोकेभ्यः महतीमभ्युदीतिमानीता प्राचीनैरार्यविद्वद्वतंसैरिति तदीया विविधतन्त्रप्रबन्धराशय एव विशदयन्ति प्रकाममसम्भ्यम् । सेयमधुना श्रीवैदिकी धर्मदेवीव कलिविलासप्राबल्येन विरलप्रचारा साधुलोकमात्राश्रया दरीदृश्यते । तत्रैव भारत इति परं विषादास्पदं विद्वद्वर्याणाम् । देशभाषामात्रव्यामोह एवात्र निदानमिति च मन्यन्ते विज्ञवर्याः । सत्यामपि च संस्कृतभाषाया ईदृश्यां दशायां महाकविरयमान्ध्रभागधेयेनेव समुदितः प्राचीनमर्यादासंरक्षकोऽक्षराभ्यासप्रभृति बहुतरकृतसंस्कृतभाषापरिश्रमोऽधीतशब्दतन्त्रादिबहुतन्त्रो धर्मतन्त्रादिविहितधर्मव्यवस्थावज्रदर्पणादिबहुप्रबन्धराजस्सुप्रसिद्धो महाविद्वानुत्तरे वयसि स्वीयकविताशक्तिमनन्यादृशीं दिदर्शयिषुरिव महाकाव्यत्रयं निर्ममे । तत्रादिमं कंससंहारमहाकाव्यम्, द्वितीयं दुर्गानुग्रहमहाकाव्यम्, तृतीयमिदं श्रीवीरकृष्णविजयाभिधं महाकाव्यम्, श्रीशिवनुत्यादीनि खण्डकाव्यानि च बहून्यमुद्रितानि सन्ति निर्मितान्येतत्कविना । स चायं प्रतिकाव्यमुपोद्घातसर्गेषु संस्कृतभाषाया

महिमानं दशां चाधुनातनीं स्वीयां च दशां सह बहुभिरत्यावश्यकैरंशै-
स्समुद्बोधयदिति न चेद्स्माभिरत्रोद्बोधनीयम् । महाकवेरस्य विविध-
तन्त्रप्रबन्धनिर्माणचातुरीं व्यञ्जयन्त्येव तानि विद्वत्कविसार्वभौमेत्यादीनि
दशबिरुदरत्नानि महाविद्वन्महासभावाप्तानीति न तत्रापि नः प्रशंसार्ह-
तीह पुनर्निरूपणम्— ग्रन्थसमाप्तिगद्येन पौनरुक्त्यभयात् । परं त्वस्य विद्व-
त्कविरत्नस्य कविताप्रतिभा यथा यथा प्रससार तन्निरूपणं किंचित्प्रेक्षाव-
त्प्रवृत्तयेऽत्रानुबन्धरूपेण प्रदर्शयिष्यामः—अयं च महाकविर्निधिगगन-
गजावनीमिते शालिवाहनशकान्तर्गते सर्वजिद्वर्षे मार्गशीर्षशुक्लदशम्यां
गुरुवासरे मकरलग्ने पुल्योपनामकात्रेयलक्ष्मीनृसिंहविबुधवर्यात्फण्यम्बिकायां
श्रीकोनसीममण्डलमण्डनायमान मुङ्गण्डापराभिधान मुनिखण्डमहाग्रहारे
समुदभूत्- अस्य च जननी द्वितीये मास एव स्वर्लोकमियाय । ततः
प्रभृति मातामहेन श्रीकोमलि शेषाद्रिशास्त्रिणा सम्पोषितः क्रमेणाक्षरा-
भ्यासादि संस्कृतभाषायामेव संग्रहरामायणादिग्रन्थाधीती पित्रा नवमे वर्षे
समुपनीतः क्रमेण संस्कृतकाव्यादिसाहितीग्रन्थैस्सहाभाष्यं पाणिनीयं
श्रीकाशीस्थपाठपद्धत्या समधीतवान् । अस्य च महावाणीप्रसादतस्सुक-
विता द्वादशे वर्ष एव सुप्रसन्ना प्रादुरभवत्- शास्त्राध्ययनकाल एव
तदातदा देवतास्तुत्यादिरूपाणि खण्डकाव्यान्यनेकानि विरचितानि ।
परं तु केषामपि मुद्रणदशानाप्त्त्या महाकाव्यरचने विरक्तस्तदा तदा
धर्मतन्त्रादिप्रबन्धानेव रचयामास । अष्टपञ्चाशत्तमे वर्षे कस्य चिद्ध-
निनो मित्रस्य प्रोत्साहनातिशयेन श्रीकंससंहारमहाकाव्यं सहृदयहृद-
याह्लादकं निबबन्ध । तदनु तद्गतान्कतिचन श्लोकानाकर्ण्य श्रीदुर्गानुग्रह-
महाकाव्यविधाने तत्कृतिपतिना समुत्साहितस्तं षष्टितमे वर्षे निबबन्ध ।
तदनु पुनर्नेल्लूरुपुरप्रसिद्धधार्मिकन्यायवादिशिरोमणिना श्रीकृष्णार्येण प्रो-

त्साहितश्श्रीरुक्मिणीकल्याणान्तकथामवलम्ब्येदं श्रीवीरकृष्णविजयाभिधं महाकाव्यं पञ्चषष्ठितमे वर्षे व्यधात् । अत्र च काव्ये प्रथम उपोद्घातसर्गे 'अहो भारो महान्कवेः' इति व्यासोक्तमनुवदन्निव सत्कवेस्सकलकलाविज्ञानवैशिष्ट्यरूपसाहित्यप्रतिभार्जनमत्यावश्यकमिति 'शास्त्रेषु प्रतिभा महाकविगणेनावश्यमर्ज्या यतः' इत्यादिना प्रतिपाद्य वश्यवचस्कतासाधनं निरूप्य च 'ये शास्त्रप्रतिभाविशेषगमकान् ग्रन्थान्बुधाकार्षकान्' इत्यादिना शास्त्रेषु प्रौढप्रबन्धरचनाशक्तिं मृदुमधुरगम्भीररसवत्तरकाव्यावली विरचनाशक्तिं च ये समर्जयन्ति तेभ्योऽञ्जलिं विदधात्ययं सत्कविः । तादृशशक्तिसमर्जने प्रवर्त्यमानामाधुनिकवेदशास्त्राध्ययनपद्धतिमार्षविधानेन संस्कुर्यादित्युद्घोषयति च महता ग्रन्थसन्दर्भेण । अन्ते चात्र कलिताण्डवविलासविशेषापेतधर्मबुद्धीनां नृणामर्थकाममात्रार्जनरतानां वैदिककर्ममार्गौपनिषदज्ञानमार्गयोरनधिकारितां निरूप्य भुक्तिमुक्त्यर्थिनामेका पारमेश्वरी भक्तिरेव विविधात्मिका शरण्येति बहुधा निरूपयन्भक्तिं प्रशंसति यथा—'भक्तिश्चित्तविशोधिनी बहुभवायातावविध्वंसिनी कालेयाखिलवैकृतप्रशमनी तापत्रयोन्मूलिनी । ज्ञानानन्दरसानुभूतिजननी संसारसन्तारिणी संसाध्याखिलसाधिनी भवभुजां किं नाम नो साध्नुयात्॥' इति । एवमत्रैव 'धर्मिप्रष्ठकलापटिष्ठकमलाप्रेष्ठाथसाधिष्ठे'त्यादिभिः, 'स्वाद्यादद्यपि सद्य उद्गतसुधाधाराञ्जु'रीत्यादिभिः,'बुधा हरिकथासुधारसपिपासव' इत्यादिभिश्चानुप्रासादिशब्दालङ्कारगणं प्रदर्शयन् स्वीयां वैयाकरणकेसरितां विशिष्टव्याकरणप्रयोगैरन्वर्थयंश्च तत्रापि हृदयङ्गमार्थवत्तां व्यञ्जयति वाक्येष्वित्यहो! महाकवेरस्य पाण्डित्यप्रतिभा वश्यवचस्कता चेति समीक्षन्तां विपश्चिद्वरेण्याः । एवं द्वितीयसर्गे राष्ट्रस्य राजराहित्ये दोषवर्णनप्रसङ्गे 'रहित गृहपेण सद्गृहम्' इत्यादिभिरुपमादिप्रदर्शनपूर्वकं

यथाऽवर्णयत्तथा सुतसन्ततिसमर्जनावश्यकतायां गृहिणाम् 'स्वयमेव सुतात्मना यतो भवति प्रेम परं तदात्मनि। मुकुरे मुखदर्शनं यथा स्वमतिप्रीतिकरं तथास्य च ॥' इत्यादिभिश्श्रुतिस्मृत्यादिविज्ञानप्रदर्शनं सोपमादि यथाविज्ञहृदयाकर्षकं वर्णितमत्र पश्यं तु तथा श्रीकृष्णयमसंवादवर्णने धर्मनिरूपणादि च। तथा तृतीयसर्गे रामकृष्णमधुराप्रवेशमहोत्सववर्णने विशिष्टां स्वां लोकज्ञतां मधुरासौभाग्यवर्णने 'यत्र स्त्रियस्समभिवीक्ष्य सुराङ्गनास्ताः' इत्यादिभिरुत्प्रेक्षातिशयोक्त्याद्यलङ्कारगणप्रदर्शनं 'प्रातः परेद्युररुणी' इत्यादिभिस्सूर्योदयवर्णनादिषु प्रावीण्यमनेन प्रादर्शि। तथैव चतुर्थसर्गे गदायुद्धाद्यभिवर्णने सूर्यास्तमयवर्णने च पश्यं तु। एवं पञ्चमे सर्गे यदूत्पत्तिवर्णनप्रसङ्गे गर्भिणीधर्मादिवर्णनमुखेन स्वं धर्मशास्त्रपाण्डित्यं, षष्ठसर्गे यदुविलासराज्यपालनविवाहवर्णनेषु सप्तमसर्गे यदुकृतस्वसुतराज्यपालनोपदेशादिषु विकद्रुकृतनयोपदेशवर्णने च नीतिशास्त्रविज्ञतां च प्रादर्शयदयं कविरिति तुष्यंतु। अष्टमे सर्गे श्रीकृष्णकृतनयोपदेशनं गोमन्तप्रस्थाने परशुरामदर्शनसंभाषणादिवर्णनं गिरिवर्णनं तत्कूटप्रवेशवर्णनं च हृदयङ्गमम्। अत्रैव कूटस्थयोस्तयोस्सूर्योदयसूर्यास्तमयदर्शनवर्णनं तु 'नेक्षेतोद्यन्तमादित्यं नास्तयन्तं कदाचन' इति धर्मशास्त्रनिषेधे सत्यपि गिरेरत्युन्नतत्वावबोधनाशयेन नृणामेवायं निषेधो न देवानां, न वा भगवद्रूपयो रामकृष्णयोरित्याशयेन वेति मन्यामहे- हरिवंशे व्यासेन तथा वर्णनाच्च। नवमे सर्गे प्रकारान्तरेण पुनस्सूर्यास्तमयवर्णनं, राममागधगदायुद्धादिवर्णनं, शृगालवधवर्णनादि च द्रष्टव्यम्। दशमे सर्गे रामव्रजगमनवर्णने रामेणसह गोपालककृतप्रीतिसम्भाषणेषु यथा स्वभावोक्तिर्दर्शिता तथैव यमुनाकर्षणवर्णनं, रुक्मिणीस्वयंवरार्थं सगरुडश्रीकृष्णकुण्डिनपुरप्रस्थान तत्प्रवेशवर्णनं,

श्रीकृष्णागमनभीतेन जरासन्धेन मन्त्रणसभायां श्रीकृष्णमहिमानुवर्णनप्रसङ्गेन दशावतारवर्णनं, नयानुवर्णनं, भीष्मकभीत्यादिवर्णनं च यथा यथा सहृदयहृदयङ्गममत्र दर्शितं तत्परिशीलयन्तु । एकादशे च सर्गे कुण्डिनादिन्द्रशासनानुरोधेन राज्ञां श्रीकृष्णपट्टाभिषेकार्थं गमनं श्रीराजेन्द्रपदव्यां श्रीकृष्णपट्टाभिषेकदिव्यमहोत्सववर्णनमभिषिक्तश्रीकृष्णवर्णनं राज्ञां समाश्वासनं भीष्मकाय श्रीकृष्णोपदेशवर्णनं च यथाऽनेन महाकविना कृतं तत्स्वयमेव दृष्ट्वाऽऽनन्दयत चेतांसि रसामृतास्वादनेनेत्यर्थयामः । द्वादशे च सर्गे कुण्डिने पुना राज्ञां मिथोमन्त्रणं कालयवनानयनं· यादवानां मधुरात्यागः कुशस्थलीप्रवेशः कालयवनवधः मुचुकुन्दाय वरदानं द्वारकानिर्माणं तन्नगरापूर्ववर्णनं चातिहृदयङ्गमानि ग्रन्थविस्तरभीत्यात्र कानि चिदपि पद्यानि न दर्शितानि स्वयं वेद्यानि ।

अथ कृतिकन्यकायास्सर्वाभरणभूषितायास्सुलक्षणलक्षितायाश्चूडामणीभूते त्रयोदशे रुक्मिणीकल्याणसर्गे मधुरमधुरे कृतिकर्तुः प्रतिभा यथायथा प्रबभौ, तन्निरूपणं किंचिदत्र कतिभिः पद्यैर्विधास्यामः । दमघोषेण रुक्मिणीशिशुपालयोर्विवाहार्थं श्रीकृष्णाय शुभलेखाप्रेषणाद्युपवर्ण्य विवाहोत्सवसन्दर्शनाय भ्रात्रासह ससैन्यस्य सेर्ष्यस्य श्रीकृष्णस्य कुण्डिनगमनमुपवर्ण्य च स्वसखीमुखेन श्रीकृष्णागमनं श्रुतवत्या स्वाभीष्टसाधनाय रुक्मिण्यास्स्वहृदये स्वकर्तव्यविमर्शनप्रसङ्गे 'श्रुत्वा कृष्णमुपागतं स्वहृदये सा चिन्तयद्रुक्मि'णीत्यारभ्य'हित्वा केसरिणं मृगेन्द्रतनया भर्तारमिच्छेन्मृगं सर्वाजय्यमुपेन्द्रमुग्रमहसं विश्वैकवीरं विभुम् । राजेन्द्रं रमणीयविग्रहरुचिं पुंसां च सम्मोहिनं सर्वज्ञं परिहाय सर्वजगतीनाथं परं किं भजे ॥' इत्यादिभिः, 'वीर्येणाखिलवैरिवीरनिवहप्राणानुकर्षाद्रणे' इत्यादिना कृष्णनाम्नोन्वर्थतां निरूपणादिकं 'साहं क्षत्रियकन्यका' इत्यादिना क्षत्र

विवाहधर्मरहस्यनिरूपणद्वारा रुक्मिण्यास्स्वभावनिवेदिकपत्रप्रेषणप्रवृत्तिवर्णनं 'वर्याहं प्रणमामि भीष्मकसुता' इत्यादिभिः, प्रेष्यपत्रविशिष्टांशवर्णनम्, 'आबाल्यं सहजं तवापहरणम्' इत्यादिभिरपहरणसमयसूचनादौ च लेखप्राप्त्यनन्तरं श्रीकृष्णस्य शृङ्गारवीरकरुणरसोद्रेकानुगुणहृदयचिन्तनवर्णनं च, तथा कृष्णप्रतिभाषणश्रवणानन्तरं च रुक्मिण्या हृदयचिन्तनवर्णनादिकं च यथायथायं महाकविरनन्यप्रतिभया तत्तद्रसानुगुणं विदध्यौ। तदेतदपूर्वमखिलरसज्ञविज्ञलोकहृदयाकर्षकमतितरां मन्यामहे। अयं च कविरत्र श्रीहरिवंशश्रीमद्भागवतवर्णितकथावैलक्षण्येन स्वीयां सरससरसां कल्पनाशक्तिमपि प्रादर्शयत्। सैषा कल्पनापि कथासन्दर्भौचित्यानुगुणतया नितरां रसज्ञहृदयाकर्षिण्येवेति मन्यामहे। सर्गोयमामूलचूडमतितरामुपमोत्प्रेक्षापरिकरादिभिरलङ्कारैरलंकृतो मृदुमधुरगम्भीरभावविलसितो विज्ञविमृश्यविषयविशिष्टो महाकविप्रतिभाविशेषं पुष्णातीति मे मतम्। अस्य च महाविद्वत्कवेर्धर्मव्यवस्थावज्रदर्पणवज्रहारादिधर्मतन्त्रप्रबन्धाः प्रौढोक्तिप्रकृष्टाश्शास्त्रप्रौढतां प्राचीकशंस्तथा मृदुमधुरगम्भीरसत्काव्यविनिर्माणचातुरीं श्रीकंससंहार, दुर्गानुग्रह, वीरकृष्णविजयादिमहाकाव्यानि शिवनुत्यादिखण्डकाव्यानि च प्रदर्शयन्तीत्यहो सर्वतोमुखं पाण्डित्यमस्येति, विद्वत्कविसार्वभौमपदमन्वर्थमिति च नितरां तुष्यामः। एतद्ग्रन्थपरिशीलनेन सकलमपि विज्ञानां विशदमेव स्यादित्यान्ध्रलोकालङ्कारभूता एते दीर्घायुषो बहुलग्रन्थनिर्मातारश्च भूयासुरित्यभ्यर्थयामस्सर्वेश्वरमिति शम्। ईदृशरसवत्तरमहाकाव्यनिर्माणप्रोत्साहकाः कृतिपतयोऽपि सकलाभ्युदयपरम्परापरिवर्धिता दीर्घायुषस्वकुल्यैर्भूयासुरित्याशास्महे।

इति,

'तर्करत्न, न्यायवेदान्तविद्यापारीण'

बुलुसुपनामकाप्पन्नशास्त्री।



कृतिभर्तारः

ब्र। वे। इंगुव श्रीकृष्णय्यमहाशयाः ॥

श्रीमहावाण्यै नमः ।

## श्रीकृतिकर्तृकृता

## श्रीकृतिपतिवंशादिप्रशंसापद्यमाला ।

अस्त्यान्ध्रधरणिरमणीमणिभूषणमिन्दिरानिवासगृहम् ।
ग्रामः करेड्डुनामा वाग्देवीविहरणायतनम् ॥१॥

प्रागब्धिशीतमारुतसततसुखास्वादकस्स्वजनतायाः ।
मल्लीमरुवकदमनकजातीचामन्तिकादिवनहृद्यः ॥२॥

रम्भारसाललिकुचद्राक्षालाङ्गल्यगादिवनलसितः ।
बहुविधशालिप्रसवोदञ्चत्केदारभूतलमनोज्ञः ॥३॥

निजधर्मनिरतदेवद्विजगुरुभूपालभक्तजनताढ्यः ।
कृतयुगितकलियुगश्श्रीश्रोत्रियविप्रेन्द्रधर्मभजनेन ॥४॥

अत्रासन्निगुवोपाभिधकुलपतयश्शौनकर्षीन्द्रगोत्रा-
लङ्कारास्श्रीद्विजेन्द्राः फलवदुपहिताम्नायनानागमाढ्याः ।
श्रौतैस्स्मार्तैर्विधानैर्विधिविहितदिशा चर्यमाणैः प्रसिद्धाः
शिष्येभ्यस्साङ्गवेदप्रवचनविधिभिस्सर्वदा संसदीशाः ॥५॥

तेषु द्वौ प्रादुरास्तां गुणगरिमयशश्चन्द्रिकाद्योतिताशौ
सोदर्यौ यज्ववर्यौ निगमतनुधरावप्पनाख्यश्च कृष्णः ।
साङ्गाम्नायादिविद्यागतनिखिलरहस्यार्थबोधप्रसिद्धा-
वार्षश्रीधर्मदेवीनियतभजनगौ तौ मुनीन्द्राविवाढ्यौ ॥६॥

तत्र श्रीकृष्णनाम्नो मखिन उरुगुणा आत्मजाः प्रादुरासन्
म्वोपास्यास्सूनुरूपास्त्रय इव महिता अग्नयस्सुप्रसन्नाः ।
यज्वानो यज्ञरामाभिधविबुधवरो रामलिङ्गस्सुधीन्द्रः
प्रख्यातो रामकृष्णस्सकलबुधनुतस्ते त्रयो गुण्यगण्याः ॥७॥

इह यज्ञरामयज्वन उदितौ तु द्वौ सुतौ बुधस्तुत्यौ ।
वेङ्कटरामबुधेन्द्रश्श्रीमान्पट्टाभिरामशास्त्र्यपरः ॥८॥
आत्मज्ञानमहिम्ना ब्रह्मीभूतस्य रामलिङ्गविदः ।
कृष्णावधानिनामा सुब्रह्मण्याध्वरी च तनयौ द्वौ ॥९॥
श्रीरामकृष्णमखिनोऽप्यास्तां तनयौ कलारहस्यविदौ ।
लक्ष्मणयज्वा विबुधो विदितश्श्रीवीरराघवमखी च ॥१०॥
स तु वीरराघवमखी निजपत्न्यां स्वर्गमुपगतायां च ।
नित्याग्निहोत्रनिरतः कुशपत्न्याग्नीनुपास्त विधिवेत्ता ॥११॥
यश्चात्मतत्त्वबोधं प्रकाशयन्ब्रह्मसूत्राणि ।
वैयासिकानि साधु व्यवृणुत विदुषां मुदे महाविद्वान् ॥१२॥
तद्रामलिङ्गसुधियस्तनयः कृष्णावधानिनामासौ ।
लक्ष्मीदेव्यां साक्षाल्लक्ष्म्यामिव मानुषीत्वगामिन्याम् ॥१३॥
स्वसुगुणकुसुमामोदितजगतीजनतानुतात्मचरितायाम् ।
वेङ्कटराघवसंज्ञं पुत्रं पुत्रीश्चतस्र उपलेभे ॥१४॥
ता वेङ्कमाम्बिकाख्या कामाक्ष्यम्बा च सीताम्बा ।
नागाम्बेति सुवृत्ताम्साध्व्यो गुणिगण्यसकलसुगुणाढ्याः ॥१५॥
वेङ्कटराघवविबुधश्श्रीभारद्वाजगोत्रतिलकस्य ।
रामस्वामिबुधेन्दोः कोटान्वयसिन्धुजस्य सत्पत्न्याम् ॥१३॥
लक्ष्मीदेव्यभिधायां मेनायामिव हिमवतोभ्युदिताम् ।
तां पार्वतीमिव शिवो व्युवाह पत्नीं मुदाऽन्नपूर्णाख्याम् ॥१७॥
या बन्धून्निजतनयानिव सुहृदो बन्धुवत्प्रजास्सर्वाः ।
ग्रामीणा अतिथीनपि मित्रवदाहृत्य नित्यमपुषत्तान् ॥१८॥

नित्यान्नदाननिरताऽतिथ्यभ्यागतजनेभ्य आदरतः ।
स्वग्रामीणजनेभ्यो ददती तदभीप्सितार्थसंघातम् ॥१९॥
अन्वर्थनामधेयेत्यखिलजनैस्संस्तुता चचार सती ।
भर्तारमीशमिव साद्रियमाणा साधयन्त्यभीष्टार्थान् ॥२०॥
देवद्विजगुरुपूजामुखकृत्येष्वतितरां भक्त्या ।
भर्तुस्साह्यं दधती स्वयमपि सा प्रववृतेऽनिशं तत्र ॥२१॥
अलमधिकेन यदीयं साध्वीचरितं समीक्ष्य सकलमपि ।
स्त्रैणोऽसुकृत्यगुण्यस्साध्वीधर्माश्रयोऽभवत्तत्र ॥२२॥
वेङ्कटराघवविबुधोऽप्यग्न्यमरातिथिबुधार्चनासक्तः ।
नैगमिकतत्त्वचिन्तननिरतोऽयापयदनेहसं सुगृही ॥२३॥
श्रीधर्मदेवतायाः प्रसादतश्श्रीमदन्नपूर्णायाम् ।
देवक्यामिव तस्यां पुत्रं श्रीकृष्णमेष उपलेभे ॥२४॥
कृष्णां वेङ्कटसुब्बाम्बाभिख्यामादिलक्ष्यभिख्यां च ।
दुहितॄस्तिस्रस्सोऽयं वेङ्कटराघवबुधः प्राप ॥२५॥
श्रीवाणीगिरिजावत्पतिशुश्रूषादिविमलचरितैस्ताः ।
देवातिथ्यभ्यागतपूजनशिशुपोषणादिभिः ख्याताः ॥२६॥
श्रीकृष्णोऽयं शिशुत्वप्रभृति निजमतिप्राभवं बाल्यलीला-
सम्भाषाधीतिसन्ध्याग्न्युपचरणसुराराधनादिष्वजस्रम् ।
देवे धर्मे च भक्तिं विततबहुकलातत्त्वविज्ञानसक्तिं
रक्तिं बन्धुष्वरक्तिं कलिकृतिषु सदा दर्शयन्वृद्धसेवी ॥२७॥
हौणीमान्ध्रीं च कक्ष्याक्रमश इह गिरं पाठशालास्वधीत्य
प्रोत्तीर्णो न्यायशास्त्रे नरपतिविहिते न्यायवादित्वमाप्तः ।

पिच्चाम्बां धर्मनिष्ठां स्वसुगुणकुसुमामोदितस्त्रीकदम्बां
रूपौदार्याढ्यशीलादिभिरुद्वहदत्यञ्चितां साधुवृत्ताम् ॥२८॥
कौण्डिन्यगोत्रकौस्तुभमणिविद्वद्दोल्लपूडिकोटार्यात् ।
उदियाय कृष्णलक्ष्म्यां पिच्चाम्बा रुक्मिणीव साधुगुणा ॥२९॥
वेङ्कटरामसुधीमणिदौहित्री चात्मवंश्यगुणवृत्तैः ।
अप्यन्विता सुरूपा तामुपयेमेऽनुरागतः कृष्णः ॥३०॥
परिगृह्य धर्मपत्नीमनुरूपतां गृहस्थधर्मरतः ।
श्रीवाणीधरणीमणिसम्पोषी धर्मदेवतां प्रभजनन् ॥३१॥
स्वां न्यायवादवृत्तिं स्वीकृत्य न्यायधाम्नि कृष्णसुधीः ।
प्रथयन्मतिवैशद्यं सत्कीर्तिवधूपगूढ उदियाय ॥३२॥
गुण्यश्श्रीतूमुलूर्यन्वयभवविबुधव्रातचिन्तामणि-
श्श्रीवाणीभूकीर्तिकान्तापतिरतिविदितो न्यायवाद्यग्रगण्यः ।
दाता सर्वस्य धाता कृपणजनततेर्धर्मसंस्थालिपाता
पूतात्मा सिंहपुर्यां स जयति शिवरामाभिधो धर्मिनेता॥३३॥
यत्सौजन्यं समीक्ष्याखिलसुगुणगणैस्सम्पदोऽवृण्वताढ्याः
सर्वास्ता धर्मदेवी प्रियसुतमिव यं पाति पुष्णाति कामम् ।
यत्कीर्तिश्रीवधूटी नटति दशदिशारङ्गदेशे बुधाग्र्या-
न्वृत्तैस्सम्मोदयन्ती स जयति शिवरामाभिधो वेङ्कटाद्यः ॥
सोऽयं श्रीकृष्णमेनं निजवसतिमुपानीय तन्मद्रपुर्या-
मास्थाप्य न्यायवादे समुचितविधया शिक्षयंश्च क्रमेण ।
संवर्ध्य न्यायवादिप्रमुखमतनुतानेकधा सिंहपुर्यां
जीयाद्रक्षन्प्रियास्स्वाश्चिरमिह शिवरामार्य आत्मीयवंश्यैः ॥

श्रीकृष्णं न्यायवादिप्रमुखपदगतं कप्पगन्तूपनामा-
त्वग्र्यंभट्टावधानीत्यखिलबुधनुतस्सद्गृही वेदवेत्ता ।
तीव्रं वैराग्यमाप्तो भवगतविषयेष्वात्मनस्स्वं स्थिराद्यं
सर्वं श्रीकालहस्तीश्वरभजनकृते त्वर्पयित्वाऽतिभक्त्या॥ ३६॥

पारिव्राज्यं प्रपन्नश्शमदममुखसल्लक्षणाढ्यो मुमुक्षु-
श्श्रीज्ञानानन्दतीर्थाह्वयमुपगतवान्योगपट्टेन विद्वान् ।
सोऽयं स्वीयोपदेशैर्निगमगतरहस्यार्थगैर्धर्मनिष्ठा-
श्रद्धावन्तं स्वकार्षीज्जयति गुरुयतिस्तीर्णसंसारसिन्धुः॥ ३७॥

श्रीकृष्णो न्यायवादिप्रमुखपदगतो नित्यमौपासनाग्निं
जुह्वत् स्मार्ताणि सर्वाण्यपि विधिविहितान्याचरन्श्रद्धयाऽयम् ।
कर्माणि न्यायधाम्नि स्वविहितसरणौ धर्मितामाप्नुवान-
श्श्रीवाणीधर्मदेवीस्वविमलचरितैर्मोदयन्बोभवीति ॥ ३८॥

मृष्टान्नं यस्य पंक्तावतिथिविबुधततेरातिथेयस्य तुष्ट्या
मित्राणां बन्धुताया अपि सुखवसतिर्यस्य गेहं समन्तात् ।
यत्सौधद्वारशाला निजविविधकलाचातुरीदर्शकानां
गोष्ठीभिः पण्डितानां ध्वनति यदुपकृत्यर्थिनामन्वहं च॥ ३९॥

श्रौती स्मार्ती च पौराण्यपि निजविधिभिर्ये श्रिता धर्मदेवी
येनाभीष्टार्थदानैरपि विबुधवरास्सत्कृता यान्ति तुष्टाः ।
कालेयाधर्मदूरीकृतिविहितमहाधर्मसंस्थास्सुगुप्ता
येनाम्नायागमादिप्रवचनविहिताः पोषिताः पाठशालाः॥ ४०॥

यो मल्लाद्यन्वयाम्भोनिधिविधुबुधराड्नामकृष्णाध्वरीन्द्रा-
त्प्राप्य ब्रह्मात्मतत्त्वावगमनविषये सूत्रभाष्योपदेशम् ।

शिष्टं श्रीकालिदासान्वयजलधिसुधादीधितेर्वेङ्कटाद्या-
न्छ्रीसुब्बाशास्त्रिवर्यादखिलमधिजगे भक्तितस्तत्तु भाष्यम् ॥
पश्चाच्छ्रीशास्त्ररत्नाकरविरुदलसन्मण्डलीकोपनाम-
ख्याताच्छ्रीवेङ्कटाख्याविदितबुधगुरोः प्राप्तवान्ब्रह्मविद्याम् ।
श्रुत्वा वेदान्तशास्त्रप्रथितविवरणग्रन्थभाष्यार्थजालं
भेजे सन्तुष्टचित्तो गुरुवरमखिलाभीप्सितार्थानुसन्ध्या॥४२॥

पित्रा वेङ्कटराघवविदुषा केदारभूनिरपि दत्ता ।
श्रुत्वौपनिषदतत्त्वं श्रीवेङ्कटशास्त्रिणे सुतुष्टेन ॥४३॥

भवनमपि सौधतुल्यं धार्मिकपौरव्रजार्थसाह्येन ।
श्रीकृष्णचोदनया निर्मितमपि दत्तमार्यमार्याय ॥४४॥

श्रीपुष्पगिरिजगद्गुरुपीठपतीनागतान्निजं ग्रामम् ।
इंगुवकुल्या विधिवत्समामार्चिचंस्तत्सभापतयः ॥४५॥

भिक्षांघ्रिपूजनादिभिरत्यधिकममानयन्निजाः पूर्वे ।
श्रीकृष्णोऽप्यधिकतरं तानार्चिचदुच्चभक्तिकलितोऽयम् ॥४६॥

श्रीमज्जगद्गुरुश्रीकाञ्चीश्रीकामकोटिपीठेशान् ।
आचार्यसार्वभौमान् सर्वज्ञांश्चन्द्रशेखरयतीन्द्रान् ॥४७॥

सिंहपुरीमुपयातान् भक्तिश्रद्धान्वितस्स्वगृहे ।
सौवर्णकुसुमजालेनाभ्यर्च्य तदीयपादपद्मयुगम् ॥४८॥

सौवर्णबिल्वहारेणाभ्यर्च्य च चन्द्रमौलिगलभागम् ।
भिक्षाढ्यदक्षिणादिभिरभ्यार्चिचदेषकृष्ण सुधीः ॥४९॥

श्रीकृष्णसुगुणसुमगणसौरभसम्मोदितात्मानः ।
ते भुक्तिमुक्तिफलदं मन्त्रं समुपादिशन्क्रमप्यस्मै ॥५०॥

गुरुभक्तिपूर्णहृदयश्श्रीकृष्णो नागपत्तननिबद्धे ।
गत्वा चातुर्मास्यव्रते पुनर्वीक्ष्य पीठगं देवम् ॥५१॥

गुरुवर्यानपि भक्त्या सम्पूज्य च वज्रघटितकोटीरम् ।
श्रीमत्त्रिपुरेश्वर्यै समर्प्य धन्योऽभवज्जगति ॥५२॥

आसेत्वातुहिनाचलं गतवता पित्रैककृत्वः पुन-
र्वध्वाऽनेहसि चान्यथाखिलमहाक्षेत्राणि तीर्थानि च ।
संसेव्यामरमूर्तिसङ्घमभितो भक्त्येह कर्मावनौ
धन्यात्मत्वमुपार्जितं हि सुधिया कृष्णेन पूतात्मना ॥५३॥

काश्यां पण्डितमण्डलीं स्वयमुपाहूयादरात्संसदं
सन्धाप्यातितरां प्रमोदभरतस्सत्कृत्य तानुत्कटम् ।
विद्यास्वादरमात्मनोऽभिकलयंस्तन्मोदपूर्णाशिषो
जग्राहाहह सत्कलाध्ययनजं विज्ञानमस्योन्नतम् ॥५४॥

विज्ञानं यस्य पूर्णं बहुविधसुकलासाहितीसंस्कृतीड्यं
श्रद्धा धर्मेषु वृद्धार्चनविधिनिरतिर्दैवभक्तिः प्रकृष्टा ।
प्रज्ञानं यस्य सूक्ष्मग्रहणविधिगतं साध्वसाध्वोर्विवेके
कुत्राप्यज्ञानवत्ता न भवति विबुधस्यास्य सर्वांशकेषु ॥५५॥

श्रीकृष्णोऽयं तु धर्मांगुवकुलतिलको वेङ्कटं राघवार्यं
पुत्रं स्वीकृत्य गण्याखिलसुगुणगणं सूपनीयोक्तकाले ।
साङ्गं वेदं यथावद्बुधगुरुनिकटेऽध्यापयत्यार्षधर्म-
श्रद्धावान्दुष्कलावप्यहह विहितसन्ध्याग्निकार्यादिसक्तम् ॥

प्रद्युम्नेनेव लोकोत्तरगुणललितैरुक्मिणी कृष्णयुग्मं
दीर्घायुर्भाग्यविद्या विलसितनिजधर्मावनाद्यैः प्रकामम् ।
पिच्चाम्बाकृष्णयुग्मं जयतु सुचरितैर्मोदमानं चिराय
स्वं वंशं सत्प्रजाभिर्भुवि बहुलयता राघवार्यात्मजेन ॥५७॥

पिच्चाम्बा साऽऽतिथेयी प्रतिदिनमतिथिव्रातमिष्टान्नदात्री
सन्तुष्टैरन्नपूर्णा मनुजतनुधरा गीयते विप्रवर्यैः ।

भर्तारं सेवमाना सुरमहनरता भक्तितो भव्यवृत्ता
व्यासोक्तानेकनित्यव्रतविधिनिरताऽन्या महेशीव जीयात् ॥
भक्तिश्रद्धान्वितेन प्रतिदिनमपि याऽऽराधिता धर्मदेवी
श्रीकृष्णेन स्वपूर्वैस्सह नियतमशेषार्थसन्धानदक्षा ।
साऽव्यात्सर्वार्थदात्री विविधविबुधसम्मानसंसक्तचित्तं
दीर्घायुष्ट्वादिदात्री सकलसुखततिं धारयन्ती चिराय ॥५९॥
आदित्याद्या ग्रहास्ते निजशुभपदगास्स्वस्ववर्गोत्तमांशे-
षूच्चस्था मित्रभाजो निजशुभफलदा धर्मपत्नीसमेतम् ।
श्रीकृष्णं राघवार्यप्रियसुतसहितं सर्वदा पान्तु सन्तं
दीर्घायुर्भाग्यभोगव्रजविविधरमावंशवृद्ध्यादिदानैः ॥६०॥
श्रीवाणीधर्मदेवीधरणिकरुणयाऽवाप्तसत्कीर्तिकान्तो
ज्ञेयज्ञस्सद्गृहस्थद्विजवरसमुपार्ज्याखिलार्थार्जकोऽयम् ।
दाता पूतात्मवृत्तो जयतु चिरमिहानन्दतो भोग्यभोक्ता
श्रीकृष्णस्स्वैः कुलीनैस्सह हरिकृपया वर्धयन्नात्मकीर्तिम् ॥
प्रद्युम्नाद्यात्मजन्मव्रतकृतललितानन्द्यमानात्मचित्त-
श्श्रीरुक्मिण्यादिपत्नीविलसितविवशो द्वारकाराजधान्याम् ।
दिव्ये सौधे वसानो जगदवनरतो विक्रमश्रीपुरस्थं
पित्राम्बाराघवाढ्यं सतु हरिरवतात्सर्वदा कृष्णविज्ञम् ॥६२॥
वाणि! त्वत्कृतिकन्यास्वीकारप्राप्तकीर्तिसुकृताभ्याम् ।
भासस्वतादृभुवि वंशं यावद्भान्विन्दु कृष्णसुधीः ॥६३॥
अभिनवपण्डितराजाद्यभिरूपसभाप्तबिरुदनवरत्नः ।
कृतिपतिमुमामहेश्वरविद्वत्कविसार्वभौम इति वष्टि ॥६४॥

इति श्रीकृतिपतिवंशादिप्रशंसा
कृतिकर्तृकृता ।



ब्र । वे । इंगुव श्रीकृष्णय्यमहाशयानां
चिरंजीविनौ स्नुषापुत्रौ ।

श्रीमहावाण्यै नमः ।

श्रीकृष्णसुतोद्वाहकृतिस्वीकृतिप्रशंसा-

# पद्यमणिमाला ।

## श्रीकृतिकर्तृकृता ।

स्वस्ति श्रीमति नन्दनफाल्गुनकृष्णद्वितीयतिथिवपुषि ।
श्रीगोल्लपूडि वेङ्कटसुब्बार्यसुतां सुरूपसुगुणाढ्याम् ॥१॥

अन्वर्थनामधेयां श्रीदेवीं बङ्गवोल्लुपुरवर्ये ।
श्रीमद्वेङ्कटराघवसुतेन विबुधो व्यवाहयत्कृष्णः ॥२॥

आहूता इह वेदशास्त्रविदिता विद्वद्वरादेशतः
प्राप्तास्ते बहवः कलासु कुशला गान्धर्वमुख्यासु च ।
स्वप्रावीण्यमदर्शयन्प्रतिदिनं संसत्स्वनन्यादृशं
सत्कारैर्बहुलैस्सुतृप्तहृदयाश्श्रीकृष्णवर्द्यैश्शुभैः ॥३॥

विद्वन्मण्डनमण्डलीककुलजश्श्रीशास्त्ररत्नाकरः
श्रीमद्वेङ्कटशास्त्र्यशेषसदसां वैवाहिकानामिह ।
अध्यक्षत्वमुपाददे प्रतिदिनं स्वैर्वाङ्मुखैर्नन्दयन्
सभ्यान् सर्वकलास्वयं विवरणैस्तत्त्वावबोधक्षमैः ॥४॥

गान्धर्वोपनिषद्रहस्यगमकैर्गानैः कदाचित्त्रयी-
तत्त्वार्थान्वयपाटवावगमकैस्सम्भाषणैरेकदा ।

धर्मोपन्यसनैर्घनादिपटनैश्श्रीरुक्मिणीकृष्णस-
त्कल्याणाकलनैर्विनोदविधिभिः पञ्चाहदीक्षा बभौ ॥५॥

जातोऽनन्यसदृक्षहामह इहादृष्टो हि वैवाहिकः
धर्मो वैदिकलौकिकाध्वसमनुस्यूतस्समानोऽचरत् ।
आर्षं वैभवमत्र पौरुषमपि प्रज्ञावदादर्शकं
सर्वं दृष्टमतिप्रमोदजनकं चाभूद्विनोदोत्तरैः ॥६॥

तस्मिन्निंगुवकृष्णभूसुरमणिस्स्वस्वीकृताश्वद्गुण-
श्रीमद्वेङ्कटराघवार्यतनयस्योद्वाहसंसन्महे ।
श्रीदेव्यास्सुगुणाब्धिरत्नवसतिप्रादुर्गतायाः बुध-
स्तोमाम्नायमहानिनादकलिते जग्राह मे सत्कृतिम् ॥७॥

श्रीमन्नन्दनफाल्गुनासितलसत्पञ्चम्यहन्यास्तिकैः
भाषातत्त्वविदग्रगैस्सुकविभिष्षड्दर्शनीपारगैः ।
वेदाकूतविदां वरैर्घनजटापाठिप्रकृष्टैर्बुधैः
गान्धर्वादिकलाकलापचतुरैस्सम्भूषितेऽभ्याददे ॥८॥

कौशेयांशुकषोडशोत्तरशतार्तातैकसाहस्रक-
द्रव्येण स्वकृतिग्रहे सदकरोच्छ्रुत्वा कृतिं मोदतः ।
मां श्रीकृष्णबुधोऽन्यपण्डितवरानहैंस्सुवासोमुखैः
वित्तैस्तृप्तिकरैस्तदाशिष उरूर्गृह्णन्नीवादरात् ॥९॥

श्रीसीताकरपीडनोत्थपुलकोद्रिक्तोज्ज्वलश्रीरस-
स्यन्नाऽपाङ्गपरम्पराऽवतु शुभा श्रीराघवस्यानिशम् ।

श्रीदेवीकरपीडनोदितमुदस्स्मेरास्यतश्शंसिनं
श्रीमद्वेङ्कटराघवार्यमखिलाभीष्टार्थसिद्धिप्रदा ॥१०॥

श्रीदेवीवरवेङ्कटराघवमिथुनं शिवद्वन्द्वम् ।
सीताराघवमिथुनं वाणीविधिमिथुमवतु शुभदायि ॥११॥

ऊरुजानिरुरोजानिरास्यजानिर्वधूवरौ ।
शिरोऽर्थदेहजानिश्च कुर्वन्त्येतौ रसोत्तरौ ॥१२॥

धर्मिन्निगुववंशदीपकमणे ! श्रीकृष्ण ! विद्वद्वरा-
शास्यं किं भवतेऽर्जितद्विजवराज्याशेषभोगालये ।
लब्ध्वा वेङ्कटराघवार्यतनयं सूद्वाह्य लक्ष्मीमिव
श्रीदेवीं च वधूं महाफलकृतिस्वीकारधन्यात्मने ॥१३॥

विद्याजन्मकृतं कुलं द्विविधमप्याचन्द्रतारं भुवि
स्थेयाद्ब्राह्ममहामहोविलसितं सत्कीर्तिकान्ताश्रितम् ।
श्रीवाणीधरणीविभूतिमहितं श्रीधर्मदेवीपरो-
पास्त्युद्भूतसमस्तसत्फलमहाभोगार्जितानन्दयुक् ॥१४॥

मित्राद्यास्तु नवग्रहास्तव कुलीनानां च मित्त्वगाः
देयस्वस्वशुभप्रदास्स्वशुभदोच्चांशादिधामस्थिताः ।
दीर्घायुर्धनधर्मसन्ततिसुविज्ञानादिसर्वार्थदाः
रक्षन्त्वक्षयसत्कृपेक्षणविनिक्षेपैस्सदा सादरम् ॥१५॥

वेदोऽधीत्यवबोधबोधनमुखैस्सम्वर्थतां त्वत्कुले
श्रौतस्मार्तपुराणधर्मविततिर्नित्यं त्वनुष्ठीयताम् ।

श्रौताग्निः क्रमसङ्गतोऽनवरतं सुश्रद्धयोपास्यतां
इन्द्राद्यास्त्वहविर्भुजोऽतिमुदितास्स्युः कर्मसिद्धिप्रदाः॥१६॥

त्वद्वंश्या अपि सत्सन्ततियुजस्सत्कीर्तिकान्तानटी-
नृत्यानन्दितसर्वसद्बुधशिरःकम्पादिसुश्लोकिताः।
विज्ञानप्रतिभाञ्चिताखिलकलातत्त्वानुसन्धायिस-
त्कृत्यालीकृतिसंग्रहात्तसुयशोज्योत्स्नामृताशान्तराः॥१७॥

देवास्सन्तु सदा प्रसन्नहृदयास्सश्रद्धभक्त्यर्चिताः
त्वद्वंश्येषु कुलक्रमागतबुधातिथ्यागतार्चादिभिः।
सन्तुष्टास्स्वमहःप्रसारणदिशा सर्वेप्सितार्थप्रदाः
भूयासुर्भवभोग्यभाग्यनिवहैर्विज्ञानतेजोऽञ्चितैः॥१८॥

श्रीवीरकृष्णविजयाभिख्यैषा सत्कृतिर्मया दत्ता।
श्रीकृष्णकरुणया ते श्रीकृष्णाऽभ्युदयदायिनी भूयात्॥१९॥

इत्याशास्ते कृतिस्रष्टा कृतिग्राहिणमात्तमुत्।
उमामहेश्वरसुधीश्श्रीकृष्णं सकुटुम्बकम्॥२०॥

श्री महागणेशाय नमः ।

# श्रीवीरकृष्णविजयमहाकाव्यम् ।



(श्री विद्वत्कविसार्वभौमीयम् ।)

## प्रथमस्सर्गः ।

श्लो ॥ ज्ञानानन्दामृतस्यन्दि शब्दब्रह्म रसात्मकम् ।
चमत्कृत्या चतुर्वर्गसिद्धिदं स्फुरताद्धृदि ॥१॥
सिद्धिबुद्ध्याश्लिष्टमूर्तिस्सिद्धिबुद्धिप्रदो विभुः ।
विध्वंसयन्नन्तरायान्विद्योतयतु वाङ्महः ॥२॥
आर्षविद्यारत्नदीपमविद्यातिमिरावृते ।
हृदम्भोजे न्यधुर्ये न स्तान्गुरून् सततं नुमः ॥३॥

शृङ्गारेण वधूमनो रिपुमनो वीरेण दीनात्मनो
भक्तानां करुणेन लौकिकमनः कार्येऽद्भुतेनात्मनः ।
हास्येनात्मसखान्भयानकमहाबीभत्सतोऽरेर्धृतिं
रौद्रेणाऽऽत्ममहामहोऽभिकलयन्पायाज्जयी श्रीहरिः ॥४॥

याऽऽम्नायागमसत्कलामयमहावाणीवधूटीनटी
वाल्मीकिप्रमुखाखिलेड्यकविराड्जिह्वाग्ररङ्गेष्वलम् ।
नानाशास्त्रपुराणकाव्यकलशैर्नानाटयमाना ददौ
ज्ञानानन्दसुधाझरीं रसपरां सा वाचि मे नृत्यतात् ॥५॥

मातर्वाणि! भवत्कृपामृतझरीसम्प्लाविता चेत्परं
सान्द्राज्ञानघनोषदूषितजडस्वान्तावनी शोधिता ।

विद्याकल्पलतां कवित्वफलदां सूक्तप्रसूनाञ्चितां
मृद्वङ्गीं सरसालिमानसहरां सद्यः प्रसूते न किम् ॥६॥
त्वत्कारुण्यकटाक्षवीक्षणविनिक्षेपात्ततेजोबलात्
बालश्रीहरिसत्कथाविलसितं श्रीकंससंहारकम् ।
पूर्णं मुद्रणयन्त्रगामि च महाकाव्यं महाधार्मिकौ-
दार्यप्राप्तधनेन रम्यहृदयाकर्षीङ्व्यकल्पोज्ज्वलम् ॥७॥
दुर्गानुग्रहलब्धलिप्सितपुमर्थोल्लासिसद्भक्तस-
च्चारित्राकलनाञ्चितं बुधहृदानन्दप्रदैर्वर्णनैः ।
दुर्गानुग्रहकाव्यमाश्वकलयः खण्डद्वयेनार्षस-
त्पौरस्त्यालम्बगतेन तावककृपापाङ्गान्प्रसार्याम्बिके ॥८॥
तन्मुद्रापितमम्ब तत्कृतिसमादात्रा लिपौ द्योसदां
आत्मीयेन धनेन संसदि कृतिस्वीकारकाले सताम् ।
साहस्रेण च षोडशोत्तरशतातीतेन सत्कृत्य मां
वस्त्राद्यैरपि चान्ध्रवाङ्मयकृतिस्वीकारकालेऽन्यवत् ॥९॥
एतावत्कृत एव केचन बुधा ग्रन्थोपरि स्वाशयाऽऽ-
विष्कारच्छलतः कृतीशकरुणाद्वारा निजार्थेप्सया ।
स्वीयान्यादरणासहिष्णुहृदयाभिव्यक्तये वापि मां
दारिद्र्योपहतं विधाय कृतिपं तच्छेदिनं चोचिरे ॥१०॥
यः प्राचीकशदेष काव्यमुखके विज्ञप्तिसंज्ञे निजे
मां दारिद्र्यमहाविषानलशिखासन्दह्यमानं वदन् ।
वित्तत्यागसुधारसेन कृतिपस्संजीव्य चाचीकर-
द्ग्रन्थं त्वेनमिति स्फुटं प्रलपतीहामुत्र दुष्टं वचः ॥११॥

तद्दारिद्र्यमुचन्ति विप्रविदुषस्सन्तोषदैन्यं सदा
वृत्त्या निर्मलया स्वयाऽभ्युपगतैरर्थैस्स्वपोषोचितैः ।
अन्यच्चापि तदन्नवस्त्रमुखपर्याप्तं मिलेन्नैत्यकं
द्रव्यं नैव कुटुम्बपोषणविधौ नित्याधिबाधावहम् ॥१२॥
त्वत्कारुण्यकटाक्षवीक्षणविनिक्षेपप्रसादेन मे
दारिद्र्यं द्विविधं च जातु न विधिप्राप्तैस्सुसन्तोषतः ।
गृह्यार्थैर्द्विजवैधवृत्तिघटितैस्सद्दातृवर्गागतैः
तत्कालानुगतैर्नवाऽन्नवसनाद्यंशेषु दैन्यं शिवे ॥१३॥
किंतु प्राक्तनकर्मसूत्रवशतोऽत्यावश्यकान्नाधिकं
लब्धं वित्तमृणं सदाप्यनुगतं नित्यातिरिक्तव्यये ।
वित्ताधिक्यसमर्थनीयविधिगे प्राणापनोदक्षमं
प्राप्तं वा न कुतोऽपि दातृत इदं दारिद्र्यमन्यादृशम् ॥१४॥
प्राणत्वं तु बहूत्तमर्णसविधप्राप्तव्यथापादकं
लोके सद्गृहिणस्सदापि हृदये खर्जूरिकाकण्टकम् ।
निर्यायान्न बहिः कथं च न तुदेन्मर्माणि वृद्धौ परां
चिन्तामावहतीह वृत्त्युपगतां लज्जामनिर्यातनात् ॥१५॥
दातुर्देयगणस्य वक्त्रमभितस्संवीक्षितुं लज्जते
पृच्छेद्देयमयं किमित्यथ बिभेत्यर्थस्य चाभावतः ।
पृष्टो दैन्यमुपेत्य कंचिदवधिं तं याचतेऽनेहसः
पश्चादर्थगतौ ददाति मुदितो नोचेज्जुगुप्सामियात् ॥१६॥
प्राणत्वं किल बाधते व्रणसदृक्सांसारिकं सर्वदा
न त्यागैकधनेन वारितमिदं केनापि वेहार्थिना ।

दत्वाऽल्पं वसु भूरि दत्तमिति तद्दारिद्र्यनिर्मूलकं
लोके व्यञ्जनमम्ब ! कीदृगिति नो मन्यामहे यत्नतः ॥१७॥

दुर्दारिद्र्यविषाग्निदाहमपि मे सञ्जीवनं चात्मनो-
वित्तत्यागसुधारसेन बुधविज्ञप्तौ प्रकाशीकृतम् ।
तच्छूलं हृदि बाधते तुदहो मर्माणि मे ह्यग्रकं
मातर्वाणि! न वेत्सि किं द्वयमिदं तथ्यं न्वतथ्यं नु वा ॥१८॥

आन्ध्रीमोहितचेतसा बहुसहस्रात्मात्मवित्तं किय-
द्दत्तं दीयत एव नान्ध्रकृतिकर्तृभ्यस्सदैतेन हि ।
कुत्राप्यान्ध्रकृतावनेन च परैः प्राकाशि नैवं नु किं
गैर्वाणीत्वमहो! कलौ बत तवैतादृग्विकारावहम् ॥१९॥

आस्तामत्र कथेयमान्ध्रविकृतिप्रद्योतिनी कुत्रचित्
साधोस्तस्य निसर्ग एष न मया ज्ञातः कदापीश्वरि ।
किं वा तद्धनलोलुपास्सुयशसस्सन्धापने चेदृशः
प्रावर्तन्त ममापमानजनने भ्रान्त्येति मन्यामहे ॥२०॥

कीर्तिं स्वर्गफलामुशन्ति विबुधा आसंसृतिस्थेयसीं
सा सद्ग्रन्थविनिर्मितेरिह विदामाप्नोति चेतोहृतः ।
कान्तासम्मितकाव्यतोऽत्र च चमत्कृत्या रसस्यन्दिनः
साहित्यामृतसागरोर्मिसदृशात्सर्वाङ्गसंशोभितात् ॥२१॥

वाल्मीक्याद्यधुनातनावधिकविप्रष्ठा अदृष्टार्थिनः
प्रख्याता अनवद्यहृद्यकवितासाम्राज्यसिंहासने ।
आसीनाः प्रतिभामयूखविलसत्सत्काव्यरत्नान्यदुः
सर्वेभ्योऽपि बुधेभ्य आढ्ययशसस्स्वर्भूतलद्योतिनः ॥२२॥

श्रीबालात्रिपुरेश्वरीव ललिताभट्टारिकायास्सुता
लभ्या ते कृपया बुधैस्सुकविताकन्या रसात्माऽञ्चिता ।
साऽऽम्नायागमसत्कलाङ्गविलसत्सत्साहितीचेटिका-
हस्तालम्बयुता नटेद्धि रसनारङ्गेषु धन्यात्मनाम् ॥२३॥

ब्रह्माहुश्श्रुतयो रसं समकलापुण्ड्रेक्षुदण्डाश्रयः
स प्राप्यः प्रतिभासमञ्चितमहामेधाभिदाद्यन्त्रतः ।
सा मेधाप्रतिभा गुरोर्भजनतो लभ्या कृपायाश्च ते
सामग्र्याध्ययनाववोधमुखया बद्धा यथावच्छिवे ॥२४॥

नाधीतिं विधिवद्विना त्ववगतिर्लभ्या कलानां कथं
बोधो यस्य न स क्षमो निगदितुं वाचा कथं शक्नुयात् ।
अज्ञातं तु वदन् स्वबुद्धिकलितं मूढोऽभिधीयेत सः
प्राज्ञैः क्वास्य कवेः पदं श्रमयुतं धूर्तस्य गण्येत वा ॥२५॥

साहित्यं श्रुतिदर्शनाखिलकलाविज्ञानजं त्वात्मनः
संस्कारं प्रतिभाविशेषकलितं स्वातन्त्र्यरूपं बुधाः ।
विद्यावेद्यसमन्वयौपयिकमित्याहुर्न तत्केवलैः
काव्यैरेव घटेत साधुपठितैरावश्यकं सत्कवेः ॥२६॥

यज्ज्ञानं यदुपाश्रयं भवति तद्वेद्यं ततो नान्यतः
साकल्येन भवेदधीतमिह तत्तन्त्रं समग्रं दिशेत् ।
ईषज्ज्ञानमुपार्जितं विषमधीसंप्रापकं चाप्यतो-
वेद्या आर्षकला गुरोर्निकटतस्तत्तत्त्वबुद्ध्यै बुधैः ॥२७॥

तत्साहित्यसुसंस्कृतीड्यमहिमोदीतात्मविज्ञानस-
त्तेजःपुञ्जबलोद्गतप्रतिभया त्वत्कारुणीजन्यया ।

शृङ्गारादिरसामृतैकरसिकस्वान्तावलीतर्षकं
सत्काव्यामृतकुम्भमाप्य ददते कल्याः कलाम्भोनिधेः ॥२८॥

केचित्कर्कशतर्कतन्त्रमुखषड्दर्शन्यतिप्रौढवा-
ग्वादैकप्रवणाः परस्परपरोक्तार्थावलीखण्डनैः ।
पाण्डित्यप्रतिभाविशेषगमकप्रौढप्रबन्धावलिं
निर्मान्तीह नमोऽस्तु मे पटुतरप्रज्ञैकवेद्यार्थकाम् ॥२९॥

अद्यत्वे श्रुतितन्त्रपाठसरणिस्सर्वाऽऽर्षभिन्ना चर-
त्याम्नायान्पृथगागमानपि बुधा एकैकशोऽधीयते ।
नाम्नायी पठतीषदङ्गमपि वा नैवागमीषच्छ्रुतिं
शास्त्रं वान्यदिहैकपौरुषनिबन्धाधीतिनोऽतिश्रमैः ॥३०॥

वेदार्थावगमोपबृंहकतया शास्त्राणि सर्वाः कलाः
आम्नायन्त इतीरितं मुनिवरैर्मुख्यं फलं कण्ठतः ।
साध्यायाध्ययनोपदेशवचनेष्वर्थावबोधं फलो-
पेतं चातितरां शशंसुरपि ते नैव श्रुतिं केवलाम् ॥३१॥

आर्षाधीत्ययनं विहाय निगमानप्यागमानेकशोऽ-
ध्येतॄणां पठनोदितं फलमृते मुख्यं फलं स्यात्कथम् ।
सर्वज्ञानमणीनिधिश्रुतिगतानऽर्घाढ्यरत्नाप्तिजं
गृह्णीते न महानिधेर्निकटगोप्यऽन्धो यथार्थाप्तिजम् ॥३२॥

एकैकागमगामिपौरुषनिबन्धालोडनादुत्कटात्
तत्राप्यार्षनिबन्धवर्जमसकृद्वादप्रबन्धेष्वलम् ।
तत्तन्त्रार्षनिबन्धतत्त्वगतिरप्यूना भवत्यन्ततो-
नात्मान्योपकृतिर्भवेच्छ्रममृते दूरे तु मुख्यं फलम् ॥३३॥

यद्बोधाय महर्षिभिः करुणया शास्त्राणि बद्धानि ते
स्वग्रन्थैर्यदि न क्षमा गमयितुं तं किं नु शक्ता अमी ।
वादग्रन्थचया बुधैर्विरचिता भाष्याणि नो सन्ति किं
तेषां तत्पठनेन तात्त्विकगतिर्न स्यात्किमज्ञा हि ते ॥३४॥
मन्त्रब्राह्मणरूपवेदपठनं साङ्गं स्मृतं स्मर्तृभिः
तत्तत्त्वावगमाय दर्शनवराधीतिस्स्मृता चर्षिभिः ।
सूत्राणामिह भाष्यवार्तिकयुजां प्रत्यागमं पाठतः
तत्तन्त्रार्थगतिर्यथावदमला स्यादेव किं पौरुषैः ॥३५॥
कालो द्वादशवत्सरैः परिमितोऽधीतौ श्रुतीनां पुनः
साङ्गानां मुनिभिस्स नालमधुना वेऽदेपि वा केवले ।
शास्त्रे वा भवतीह पौरुषकृते स्यात्षोडशाब्दात्मको
निष्णातुं यदि दैवकी च करुणा किं स्यादितश्चिन्त्यताम् ॥
आर्षाधीतिविधिं बुधा विमृशताऽव्याजं नवां पद्धतिं
विज्ञानं घटते कियत्कुत इहामुत्रार्थसंसाधकम् ।
ये वेदार्थमुचन्ति कीदृशदृतिं तेऽत्राऽऽप्नुवन्त्येकशः
तन्त्राधीतिवरास्तु कीदृशदृतिं वाऽऽलोचयन्त्यात्मभिः ॥३७॥
प्राचीनाः खलु सर्वतन्त्रनिवहस्वातन्त्र्यसम्पादनं
स्वग्रन्थैः प्रतिभाविशेषगमकैः प्रचीकशन्सर्वतः ।
आम्नायागमजालमार्षविधिनाऽधीत्यार्जिजन्नुत्कटां
शक्तिं तां न तु पौरुषेण विधिनेत्यालोड्य वेद्यं बुधैः ॥३८॥
कालस्सर्वसमो नृणां परिमितं चायुस्समं वेद्यम-
त्रानन्तं समयं विभज्य मुनयोऽवोचुश्चतुर्धा तु तम् ।

वेद्यं नैगमिकं निवन्धनवरैस्स्वैर्लाघवेनाखिलं
तद्ग्रन्थांस्तदधीतिवर्त्म च विहायेदृग्गतिं प्राप्नुमः ॥३९॥
पश्य प्राच्यमहाकवीनपि महाकाव्येषु कीदृग्विधां
तन्त्रेषु प्रतिभां निजां समकलास्वादर्शयन्वर्णनैः ।
सङ्गाम्नायसमस्ततन्त्रसुकलाचातुर्यहीनाः कथं
लोके सत्कविसार्वभौमपदवीभाजो भवेयुस्सखे ॥४०॥
शास्त्रेषु प्रतिभा महाकविगणेनावश्यमर्ज्या यतः
स्वातन्त्र्यं सुकवेः कलासु सकलास्वावश्यकं वर्णने ।
तल्लभ्येत न कर्कशागमपरिज्ञानं विना वश्यता
वाचो वा परमार्षमात्रपठने नालं गुरोस्सन्निधौ ॥४१॥
ये शास्त्रप्रतिभाविशेषगमकान् ग्रन्थान् वुधाकर्षकान्
प्रौढोक्तिव्रजभासुरान्मुनिमताकूतार्थसन्दर्शिनः ।
ग्रश्नन्तोऽत्र रसोद्गिरन्मृदुमनोहार्यर्थभावोल्लस-
त्काव्यालिं रचयन्ति वश्यवचसस्तेभ्यो महद्भ्यो नमः ॥४२॥
शास्त्रेषु प्रतिभा प्यनन्यसदृशी सद्ग्रन्थबन्धक्षमा
सत्काव्यग्रथनेऽपि शक्तिरुभयं दुष्प्राप्यमत्रेक्ष्यते ।
वाणि! त्वत्करुणाकटाक्षसरणं पूर्णं बहुप्राग्भव-
त्वत्सेवाचरणोदितं यदि घटेतैकत्र तत्प्राप्यते ॥४३॥
आबाल्यं विमलाऽऽमरीमयभवत्सेवारतोऽहं तथा-
प्याम्नायाध्ययनं तु नाऽघटत मे जन्मान्तरीयाघतः ।
अङ्गं व्याकरणं विशिष्टविधयाऽधीतं गुरोस्सन्निधौ
तत्तद्दर्शनसाह्यतोऽपि विमलैः काव्यप्रबन्धैस्सह ॥४४॥

भक्त्या त्वत्पदपद्मसंस्मृतिबलाद्व्युत्पत्तिरासादिता
तत्तत्तन्त्रगता सुकाव्यरचनाशक्तिश्च विद्वत्प्रिया ।
काश्चिद्वेद्मि कलास्त्वदीयकृपया सारार्थमात्रैश्शिवे
नाधीता अपि वाङ्मुखेष्वपि च मे शक्तिर्वितीर्णा त्वया ॥४५॥
एवं सत्यपि मेऽल्पके परिकरे वैज्ञानिके वाणि! स-
द्ग्रन्थाध्यापनतो गतास्तु शरदस्त्रिंशत्कुटुम्बावने ।
श्रीलक्ष्मीकरुणाकटाक्षविरहात्पर्याप्तभूदेवता-
नुक्रोशस्य च हैन्यतोऽम्ब सुकलाध्याप्तिस्स्ववृत्तिः कृता॥४६॥
शिष्यायाभ्यवहारयन्निजगृहे विद्यास्समध्यापयन्
आचार्यस्सुकृतीव तावककृपापाङ्गप्रसारोत्थया ।
शक्त्या साधुकृतीर्विरच्य वसुना स्वेनैव मुद्रापिताः
दातुं पण्डितपुण्डरीकततये शक्तिर्न दत्ता त्वया ॥४७॥
आन्ध्रे सन्ति सहस्रशस्तु धनिनो दानैकवीरास्तथा-
प्यान्ध्रग्रन्थनिबन्धनैकनिरता वित्तं ददत्यादरात् ।
गीर्वाणोक्तिनिबन्धनेषु विमुखा मुद्रापणार्हं धनं
दातुं तद्विमुखः प्रबन्धकलने कालन्त्वनैषं वरम् ॥४८॥
धर्मोपन्यसनप्रचारणकृते नीता मया विंशतिर्वर्षाः
दुष्कलिदुर्विलासदुरितध्वंसाशयाऽऽर्यावनौ ।
तन्निर्वाहकृते निबन्धनवरा बद्धाश्च धर्मागमे
मत्पेटीशरणा अमुद्रितनिजात्मानोऽम्ब! खेदावहाः ॥४९॥
ये तु श्रीगुरुसार्वभौमयतिराट्च्छ्रीकामकोटीमहा-
पीठाधीश्वरमुख्यसत्करुणया मुद्रापिताः केचन ।

ते तु त्वत्करुणामनन्यसरणामावेदयन्तो मुहुः
विद्वन्मान्यमहोदयस्तुतिकृपापात्रं व्यधुर्मां शिवे! ॥५०॥

आबाल्यं च भवत्प्रसादजनितां सर्वाङ्गसंशोभितां
तत्तद्वर्णनतत्परां सुकविताकन्यां सुपुष्णन्मुदा ।
आलापैर्मधुरैस्सुकोमलपदन्यासैर्गभीराशयैः
हृद्यार्थैरससारिभिस्समुचितैर्नन्दाम्यहं मानसे ॥५१॥

तामानीय महासभासु विबुधस्तोमाय सन्दर्शयन्
तद्वाक्यानि मृदूनि भावमधुराण्याश्रावयन्भूरिशः ।
कश्चित्किन्विह कामयेत रुचिरां प्राज्ञो रसज्ञो बहिः
नेतुं वेत्त्यभिकांक्षतैव सकलः कालो मया यापितः ॥५२॥

मेधाशक्तिविजृम्भणार्हसमयस्सर्वस्तथा मे गतः
शास्त्राध्यापनधर्मवाङ्मुखमुखैः कैश्चित्प्रबन्धैरपि ।
काव्यैः खण्डमयैश्च कैश्चन महाकाव्यं तु नो निर्मितं
यावत् षष्ठिशरन्मितं वय इतं वाञ्छामनोराज्यतः ॥५३॥

कश्चिन्मामनुदत्सखा कृतिकृतौ दाता धनी सत्कला-
सम्पद्वर्धनकामुकोऽन्ध्रविषये पूतात्मवृत्तो बुधः ।
मित्र! त्वत्कविता विभाति सरसा गीर्वाणवाणीमयी
सत्काव्यं प्रणिधाय साधय यशोऽन्ध्राणामनन्यादृशम् ॥५४॥

तच्छ्रीकृष्णचरित्रवर्णनपरं सल्लक्षणैरञ्चितं
सर्वाङ्गोल्लसितं विधेहि सुमहाकाव्यं बुधानन्दकृत् ।
तन्मुद्रापणतत्प्रकाशनविधास्सर्वा मयोह्यन्त इ-
त्यम्भोधोजितवान्प्रकाशनदशापत्तौ दृढं निस्पृहम् ॥५५॥

विश्वस्यापि सुहृद्गिरं हृदयगग्रन्थप्रबन्धोत्कटो-
द्रेकेणापि निरन्तरेण जनितोत्साही हरेर्वंशतः ।
आदायाच्युतसत्कथां निरमिमै श्रीकंससंहारस-
त्काव्यं वर्षकपञ्चकात्तु रुचिरं प्राक्तेन चोदासितम् ॥५६॥

आन्ध्राणां सहजं नचायमजहत्त्वारम्भशौर्यं धनी-
त्यालोच्यान्ध्रधराङ्गना न हि भवेद्वन्ध्येति निश्चित्य च ।
श्रीमद्विक्रमसिंहपत्तनमगां विद्याविहारावनिं
नेल्लूर्वाह्वयमम्ब! काव्यतनयामादाय तां ते स्वयम् ॥५७॥

तत्रत्यास्सुकलाकलापचतुरास्त्वत्काव्यकन्यावचो-
भङ्गीगामिरसानुभूतिरसिका अत्यादरात्संसदः ।
काश्चित्सम्प्रणिधाय तत्र सुसमाकर्ण्याढ्यघट्टानुगाः
नानावर्णनसंहतीरसगतास्सम्भावयांचक्रिरे ॥५८॥

तन्मुद्रापणतत्प्रकाशनसमारम्भार्हवित्तेन ते
सत्कृत्याऽऽत्तमुदं तदीयरसगां सुव्यञ्जयन्तो भृशम् ।
स्वाभिर्वाग्भिरुदारबुद्ध्य इमे गीर्वाणवाणीगतां
स्वीयामाहृतिमम्ब धार्मिकवराः प्राचीकशन्कार्यतः ॥५९॥

धर्मिप्रष्ठकलापटिष्ठकमलाप्रेष्ठार्थसाधिष्ठस-
द्वर्षिष्ठाघदविष्ठभूसुरवरिष्ठाध्यष्ठिते तत्पुरे ।
कर्मिष्ठप्रथितेंगुवान्वययशोद्राघिष्ठताकृद्गुण-
ज्येष्ठो भाति वसिष्ठवत्सुविदितश्श्रीकृष्णनामा बुधः ॥६०॥

एतद्वंशपरम्पराऽतिविदिता देशे महायज्वभिः
साङ्गाम्नायरहस्यवेदिभिरिहामुत्रामरानन्दिभिः ।

श्रीवाणीधरणीविभूतिमखिलां स्वां विन्ययुञ्जन्सदा
सत्पात्रेषु विशिष्टबोधकलने यज्ञेषु ये त्रिष्वलम् ॥६१॥
पार्थक्येन निरूपयाम इह तां जानन्तु विज्ञास्ततः
स श्रीकृष्णबुधो मदीयकविताकन्योक्तिजालं मुदा ।
आकर्ण्यातितरां मुमोद रसविच्छ्रीबालकृष्णाश्रयं
प्रौढश्रीहरिसत्कथाकलनयुक्काव्यं च कांक्ष्ये मुहुः ॥६२॥
तन्मुद्रापणतत्प्रकाशनतदाहत्यादियोग्यं मया
वित्तं भो विनियुज्यते विरचयन्त्वार्थोत्मकर्षक्षमम् ।
वीरस्स्याद्धि रसोऽत्र मुख्य इतरेचाङ्गत्वमेवाप्नुयुः
सन्तानः कृतिरूप एष उभयोराचन्द्रतारं स्थिरः ॥६३॥
वृद्धोऽहं वयसा भवत्सुकविताकन्यापि वृद्धाऽऽवयोः
सम्बन्धोऽनुगुणो यतो बहुकृतीस्सासूत नानाविधाः ।
सन्तानः किल वार्थकेऽभ्युपगतो लोकेतिसौहार्दकृत्
तच्चित्तं त्वरते तुरं रचयत श्रेयस्स्वभावो हि सः ॥६४॥
इत्याकर्ण्य वचांसि विस्मितमना न त्वं वयोमात्रतो-
वृद्धोऽस्यार्यवतंस सद्बहुकलाविज्ञानतो धर्मतः ।
दानैरार्षसुकर्मभिस्सुयशसा ब्राह्मेण धाम्ना सदा
दैवाराधनतो मतेर्बिभवतो वृद्धोऽसि सत्सङ्गतः ॥६५॥
एवं त्वां बहुधाऽतिवृद्धमतुलप्रज्ञानवृद्धं च सा
सन्देग्धि स्ववशीकृतौ सललितैर्मत्काव्यकन्या हृदि ।
सैषा सिंहपुरी विशिष्टसुकलावाणीविभूषाकृति-
श्रीनिर्माणविधासुवर्णसुगुणाचञ्चत्परीक्षास्पदम् ॥६६॥

आस्तां नाम तथापि या मयि कृपा बाल्यादितस्सारिता
वाण्या पुत्र इवाधुना क्वनु गता सा स्यादिति श्रद्धया ।
उत्साहेन च हृद्गतेन बहुना सांग्रामिकं सज्जयो-
दन्तं वर्णयितुं हरेस्तु सहसा वर्ते समाधायताम् ॥६७॥

श्रद्धापूर्वकमात्मदेहशुचितासम्पादिसत्संस्क्रिया-
कर्माण्याचरितानि नैव विधितः क्वेष्टानि पूर्तानि वा ।
भक्त्या सच्चरितश्रुतिप्रभृतिभिर्नोपासितो वेश्वरः
क्व स्वर्गः क्वनु मोक्ष ऐहिकमहामुग्धस्य बोधः कथम् ॥६८॥

देहारम्भकपूर्वकर्मजफलं दुःखं सुखं भुज्यते
दुःखं तत्र च भूरि पापबलतस्त्वाभासमात्रं सुखम् ।
पापाधिक्यत एव चात्र सुकृताचारे परागास्यता
चाधिव्याधिदरिद्रतादिविविधानर्थव्यथाः प्राप्नुयुः ॥६९॥

कालोऽयं मलिनक्रियायमनकृद्धर्मक्रियाध्वंसकः
नास्तिक्यालसतादिचोदक इह स्त्रीपुंसयोस्सर्वदा ।
स्वैराचारनिजार्थकामनिरतेस्सन्धायको दुष्कलिः
प्राप्तः पञ्चसहस्रवत्सरमितो यातश्च सन्ध्यात्मकः ॥७०॥

अस्मिन्घोरमहाकलौ श्रुतिपथापेतक्रियाणां नृणां
ईषत्प्राक्तनसंस्कृतेः परिणतेरास्तिक्यभाजामिह ।
दृष्टादृष्टफलार्थिनामभिमतावाप्त्यै न कर्म क्षमं
ज्ञानं वाऽलसचेतसां विषयसंसक्तात्मनां दुर्घटम् ॥७१॥

एका भक्तिरिहैश्वरी सकलसन्धात्री जनानां कलौ
तल्लीलाश्रुतिनामकीर्तनतनुध्यानस्तवाद्यात्मिका ।

सश्रद्धा भवसागरोर्म्यभिहतीर्निर्णुद्य सन्तारयेत्
संसारं न तु भुक्तिमुक्तिफलदं योगान्तरं स्यादिह ॥७२॥

शृण्वन्नीश्वरसत्कथाश्रवणतस्संकीर्तयन्जिह्वया
तन्नामानि च सञ्जपन् हृदि मनुं ध्यायंश्च तद्विग्रहम् ।
तत्कल्याणगुणांस्तदीयमहिमव्रातं च संवर्णयन्
आत्मानं सततं समर्प्य भजते यस्तं प्रसीदेत्तु सः ॥७३॥

नित्यं हैतुकमात्मकर्म विहितं शक्त्याऽनुतिष्ठन् स्वया
त्वालस्यादपरित्यजन्नविदधन्मोहेन गर्ह्यं क्वचित् ।
भक्त्या निर्मलया कयापि च दिशाऽऽराध्नोति यस्त्वीश्वरं
भुक्तिं च द्विविधां विमुक्तिमपि तत्कारुण्यतस्सत्वियात् ॥७४॥

भक्तिश्चित्तविशोधिनी बहुभवायाताघविध्वंसिनी
काल्याखिलवैकृतप्रशमनी तापत्रयोन्मूलिनी ।
ज्ञानानन्दरसानुभूतिजननी संसारसन्तारिणी
संसाध्याखिलसाधिनी भवभुजां किं नाम नो साध्नुयात् ॥

यन्नाम्नापि धृतोऽस्तु वा स भगवानात्मा परो जीवतः
किञ्चिद्ज्ञात्सकलाव्यशक्तिकवितस्सर्वज्ञसर्वेश्वरः ।
विष्णुर्वाऽस्तु शिवोऽस्तु वा गणपतिर्ब्रह्मास्तु सूर्योऽस्तु वा
दुर्गा वास्तु रमास्तु वा भगवती श्रीभारती वास्तु नः ॥७६॥

स्त्रीपुंसात्मविभक्तशक्तिगुणकृत्याकारको लौकिक-
व्यापारोद्धरणाय भक्तहृदयाकर्षादिरक्षाकृते ।
स्वीयां जागतसंसृतिं वितनुते सर्वोत्तरां सर्वदा
तन्नामानि च तद्गुणा इव बहून्यात्मा त्विहैकः परः ॥७७॥

राज्ञो वा धनिनश्श्रयन्ति नितरामण्वर्थदानक्षमान्
एकैकार्थकृते बहूनपि चिरं त्वर्थान् कचित्प्राप्नुयुः ।
भग्नाशाः कचिदापतन्ति सकलाभीष्टार्थदानक्षमं
सर्वेशं यदि संश्रयेत किमवाप्तव्यं जनो नाप्नुयात् ॥७८॥

भक्तिश्च श्रवणादिरूपकलिता तत्कालमात्राश्रया
स्थैर्यं नैति निवर्तते च परतश्चित्तेऽन्यलग्ने नृणाम् ।
सत्काव्येन कथानुवर्णनपरा भक्तिः कवीनां दृढा
ध्यानात्मा विषयान्तरालयपसृता त्वेकाग्रतां प्रापयेत् ॥७९॥

संसारार्णवशोकवीचिविहतिश्रेणीविदीर्णात्मनः
कर्मब्रह्मपथातिगात्मचरणस्यागामिसन्दर्शिनः ।
वाणि! त्वत्करुणाभरेण भगवद्भक्त्यात्मिका तारिणी
नौकैका घटिता तरेयमधुनोदन्तं हरेर्वर्णयन् ॥८०॥

आधिः प्राणकुटुम्बकृत्यततिनिस्ताराश्रितो बाधते
व्याधिर्देहविशोषकः प्रतिदिनं कश्चित्सदा बाधते ।
यातं बुद्धिबलं सहैव वयसा तत्पञ्चषष्ट्यात्मना
त्वत्कारुण्यकटाक्षवीक्षणसुधैवैकार्थसिद्धिप्रदा ॥८१॥

या बाल्यादि कलाकलापकलने शक्तिं त्वपूर्वामदात्
यां सद्ग्रन्थविनिर्मितौ प्रवचने संसत्सु वाक्सारणे ।
विद्वन्मान्यमहोदयाढ्यबिरुदाद्यत्यादरासञ्जने
तां श्रीकृष्णजयाभिवर्णनविधौ मातर्दयां सारय ॥८२॥

श्रीकृष्णस्य कथां सुधातिमधुरां श्रीवीरसिंहस्य तां
श्रोतुं विक्रमसिंहगस्त्वरयति श्रीकृष्ण एवात्मना ।

मातस्त्वत्करुणाशरण्यचरणालम्बाऽघसंहारिणी
भक्ताभीप्सितपूरणामरलता तूर्णं न किं साधयेत् ॥८३॥
स्वाद्या यद्यपि सद्य उद्गतसुधाधाराझरीमाधुरी-
हृद्याऽनद्यतनानवद्यसुकविश्रीकाव्यविद्या बुधैः ।
स्वाद्या चाद्यतनी रसामृतपरिष्यन्दाढ्यसद्व्यस-
त्पद्यात्मा नवपादपप्रसवगो भृङ्गैर्मरन्दो यथा ॥८४॥
तत्काव्यं विबुधप्रशस्यमवनौ यत्स्याच्चतुर्वर्गदं
तच्च श्रीभगवत्कथाऽभिकलितं त्वेवाऽन्यदर्थावहम् ।
नृणां क्वाखिलशक्तयोऽद्भुतगुणा अत्यद्भुतास्ताः क्रियाः
लोकातीतमहामहःप्रभृतयस्सर्वज्ञताद्या भुवि ॥८५॥
मातर्वर्णय कर्णपेयमधुरालापैर्हरेस्सत्कथां
हृद्यार्थैर्विसरद्रसोर्मिसुभगैर्गम्भीरभावोज्वलैः ।
वर्ण्यांशोचितवृत्तिपाकगुणवत्सद्रीतिसन्दर्भितैः
सत्स्वान्तप्रसभानुकर्षणपरैः प्रावीण्यसन्दर्शिनी ॥८६॥
पश्चात्कंसहतेर्यमाभिभवनं सान्दीपनेस्सूनवे
संस्कारश्श्रुतिपाठतः परमथाचार्याय सून्वर्पणम् ।
पश्चान्मागधघोरयुद्धविजयो राजेन्द्रतासेचनं
रुक्मिण्या हरणं नृपाभिभवनं पाणिग्रहो वर्ण्यते ॥८७॥
दीर्घायुर्दिश कालमम्ब ! नय मे शिष्टं प्रबन्धावली-
निर्माणैर्बुधकर्षकैः प्रशमनं चित्तस्य सन्धेह्यलम् ।
आरोग्यं दिश गृह्यनिर्वहणकृद्वित्तं स्थिरं देहि मे
हृद्यैः पद्यसहस्रकैस्तव नुतिं चापि प्रसीदाम्बिके ! ॥८८॥

वाञ्छा मे न परास्ति देयमितरत्त्वच्चित्तगं दीयतां
यत्स्यादभ्युचितं ममाम्ब मनुषे पुत्रो न याचेत तत् ।
नेदानीं भगवच्चरित्रकलनादन्या गतिर्मानसात्
आधिव्याधिसुखाखिलार्तिशमकात्सर्वार्थसंसाधकात् ॥८९॥

बुधा हरिकथासुधारसपिपासवस्साहिती-
रसाम्बुनिधिमन्थनोद्धृतसुकाव्यकुम्भं मम ।
निधाय हृदि सर्वधा विविधसंविधानोत्तरं
निधानमिव भारतीरसझरस्य रक्षन्त्विमम् ॥९०॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजो
यश्श्रीपुल्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये श्रीमति वीरकृष्णविजये सर्गोयमाद्यो गतः ॥९१॥

इति श्रीमत्सप्तगोदावरान्तर्गत श्रीकोनसीममण्डलस्थित श्रीकौशिकी-
नदीतीरविराजमानमुङ्गण्डापराभिधान श्रीमुनिखण्डमहाग्रहाराभि-
जनान्ध्रवरवेगिनाडीकुलावतंस श्रीमदभिनवपण्डितराज, विद्या-
वाचस्पति, विद्वत्कविरत्न, कविरत्न, कुलपति, महो-
पाध्याय, वैयाकरणकेसरि, धर्मोपन्यासकेसरि, धर्म-
स्थापकेत्यादिविविधबिरुदविभूषित, विविध-
तन्त्रप्रबन्धनिर्माणचातुरीधुरीण, श्रीमत्पु-
ल्योपनामकोमामहेश्वरशास्त्रि विद्व-
त्कविसार्वभौमविरचिते श्रीवीर-
कृष्णविजयमहाकाव्ये उपो-
द्घातनिरूपणं नाम
प्रथमस्सर्गः ।
श्रीकृष्णार्पितोऽस्तु ।

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## द्वितीयस्सर्गः ।

---

### अथ कथाप्रारम्भः ।

श्लो ॥ अथ कंसहतेः परं हरिं जयिनं वीक्ष्य पितोग्रसेनकः ।
मथुराधिपतां वह प्रभो विजयिन् शाधि न इत्युवाच सः ॥१॥

जयलब्धमिदं नु माथुरं सकलं राज्यमपीह धर्मतः ।
तव कृष्ण ततोऽभिषेचयाम्यनुगृह्णीष्व कृपां प्रसारय ॥२॥

क्षणमप्यवनिस्त्वराजका जनतापीडनकृद्भवेद्धरे ।
प्रबला इह दुर्बलान्बलाद्व्यथयेयुर्बहुधा कुबुद्धयः ॥३॥

भयतो जनतावशा भवेन्न तु धर्मेण न भक्तितोऽपि वा ।
सुकृतोत्तरवत्कृतेऽपि वा विधिनाऽत्तस्ससृजे नृपालकः ॥४॥

प्रभुशिक्षणभीतितो नृणामुदियाद्धर्मविधानवासना ।
अथ भक्तिरपीह देवतानृपगोविप्रगणादिके भवेत् ॥५॥

रहितं गृहपेण सद्गृहं गृहिणां स्वैरविहारतः क्रमात् ।
विविधार्थविहीनतां गतं प्रविनश्येद्भुवनं च तादृशम् ॥६॥

जनताऽभिसरेत्स्वधर्मतश्च्युतिमाप्ता विततार्थकामदृक् ।
परपीडनतोऽर्जने तयोः प्रसभं च प्रयतेत लोलुपा ॥७॥

सकलं त्वमवैषि साहसाद्भगवन्वच्मि गृहाण राष्ट्रकम् ।
सकलाङ्गसमृद्धमाहितं जयतः कृष्ण कृपाकटाक्षतः ॥८॥

इति कंसपितुर्वचो हरिस्स निशम्याह तवोचितं वचः ।
नहि राज्यरमाजिघृक्षया हतवांस्ते तनयं नृशंसकम् ॥९॥
जननादि ममाभिशंसने स नृशंसो विविधा विधा वहन् ।
अयतिष्ट कथंन्विति स्फुटं तव साक्षात्सकलं विशाम्पते ॥१०॥
न हतोऽपि मया स कंसकस्स्वकृतात्युत्कटपापकर्मतः ।
शिशुसप्तकदुर्वधादिकादिह केशग्रहणं निमित्तकम् ॥११॥
रणरङ्गमुखेऽस्त्रशस्त्रकैर्न मृतो वीरजनोचितैः खलः ।
भयरूपमुपेत्य दारुणं निजदुष्कर्म जघान नाहनम् ॥१२॥
सुकृतैरपि दुष्कृतैस्स्वयं चरितैः कर्मभिरुत्कटैर्भृशम् ।
हृतकालविपाचितैः फलं सुखदुःखात्मकमत्र भोज्यते ॥१३॥
सबलो न विजेतुमागमं तनयं राज्यजिहीर्षया तव ।
इह मल्लरणं निरीक्षितुं तदुपाहूत उपागमं किल ॥१४॥
कृतकस्य तु मां न्ययोजयद्युधि चाणूरमुखैर्वयोऽधिकैः ।
इह घातयितुं छलात्कुधीर्भुजवीर्येण तु तानपोथयम् ॥१५॥
तत एष हि दुर्मना भृशं निजयत्नं विफलं समीक्ष्य सः ।
परुषाणि वदन्यदून्खलो व्यधयन्नन्दमुखानजिज्ञपत् ॥१६॥
सहते परुषाणि कः पुमान्निजबन्धुव्रजपीडनं च तत् ।
तदुदीतरुषाऽचकर्ष तं कचसंग्राहमहो मृतस्ततः ॥१७॥
कृतदुष्कृतकर्मपाकतो मृतमेनं त्वियतैव माशुचः ।
परलोकसुखार्जकक्रियाः कुरु राज्यं परिपालय स्वकम् ॥१८॥
जननं मृतिनान्तरीयकं सकलानामपि देहिनां सदा ।
परलोकसुखोपधायकं यदि तच्चोभयमङ्ग मङ्गलम् ॥१९॥

पुरुषार्थचतुष्टयार्जनौपयिकं जन्म सतां भवेदिह ।
असतामुभयार्थभञ्जकं धरणीभारवहं तु केवलम् ॥२०॥
असता तनयेन तेन ते धरणेश्चापि भरोऽर्जितो महान् ।
धरणीभर उद्धृतो मया स्वभरं तूद्धर पारलौकिकैः ॥२१॥
नृप धर्ममुखेन मे जयं कियतापीति यदीह मन्यसे ।
निजराज्यमवाङ्ग साधु ते प्रतिदद्यामभिषेचयाम्यहम् ॥२२॥
इति तं समयोचितोक्तिभिर्मुहुराश्वास्य तदोग्रसेनकम् ।
मधुराधिपतापदे विभुर्विधिवत्संसदि सोऽभ्यषेचयत् ॥२३॥
अथ कंसकपारलौकिकाखिलसंस्कारततिं नृपोचिताम् ।
परलोकसुखातिसाधिकां विधिवत्तेन हरिस्त्वचीकरत् ॥२४॥
तदनूदितवान्व्रजाश्रयां स हरिर्नन्दमुखात्मबन्धुताम् ।
भवितव्यमभूद्यथातथं विपदेषा महती निषूदिता ॥२५॥
व्रजमाश्रयतात्मनां हितं न विपत्काचन वाऽऽक्रमिष्यते ।
निवसन्तु सुखेन गोगणं परिरक्षन्त उदीतसम्पदः ॥२६॥
ननु नन्द पदाभिवन्दनं मम धात्र्यै शिरसा निवेदय ।
अपि गोपककामिनीसुहृत्ततये मे स्मरणं निवेदय ॥२७॥
इह शिष्टकृते वसाम्यहं मधुरायां पितृपादसन्निधौ ।
व्रजत व्रजमात्मभिस्सदा स्मरतां वो न विपत्कदाचन ॥२८॥
इति कृष्णमुखेरितं वचः प्रणिशम्याऽविजिहासवो हरिम् ।
अवदन्नयि तावकाननं परिपश्यन्त इहैव चास्महे ॥२९॥
न विना भवदाननेक्षणं क्षणमप्यङ्ग परत्र शक्नुमः ।
क्व च वस्तुमिहार्थयामहे वसतिं पाहि हरे प्रसीद नः ॥३०॥

इति नन्दमुखोदिता गिरिस्स समाकर्ण्य हरिर्जगाद तान् ।
नहि गोगणजीविनां नृणां नगरीसंवसतिर्गरीयसी ॥२१॥
तृणकाष्ठजलर्धिसंयुतं विततं पर्वतपादगं गवाम् ।
उचितं वनमिष्टचारणे तरुषण्डैर्मृदुशाद्वलैस्ततम् ॥२२॥
नगरीसविधे च तादृशं विपिनं दुर्घटमञ्चितं गुणैः ।
सकलैश्च कृषीवला यतो धरणीं कुर्युरुपात्तसस्यकाम् ॥२३॥
अणुराजकरेण जीवनं सुखकृत्काननवासिनां भवेत् ।
फलितैश्श्रमवर्जमाहितैर्विविधैश्शालिफलादिभिर्हितैः ॥२४॥
स्वकुटुम्बभृतौ धनव्ययो बहुलस्स्याद्गृहिणां हि पत्तने ।
फलितैर्जनधामसु श्रमादखिलार्थैः क्रयतोऽर्जितैर्भृतिः ॥२५॥
नगरे वसतिस्सुखावहा धनिनां विस्तृतसर्वसम्पदाम् ।
विपिने वसतिस्सुखावहा धनहीनस्य च गोधनस्य च ॥२६॥
कृषिमुख्यकृतिश्रमश्रयज्जनताया जनधाम सौख्यदम् ।
अधिकव्ययवर्जमात्मना फलमुत्पाद्य भुनक्त्यसौ गृही ॥२७॥
नगरं यदि मध्यमश्श्रयेदधनो वा कृतकैरुपायकैः ।
धनमर्ज्यमघावहक्रियैरधिकं तेन कुटुम्बपोषणे ॥२८॥
विपुलार्थसमर्जनातुरा विविधैरद्भुतसृष्टवस्तुभिः ।
करणान्यपकृष्य भूरिशो धनमादद्युरये पुरीजनाः ॥२९॥
अवशा विनियुञ्जते धनं स्वभृतेरत्यधिकं विलासिनः ।
बहुभोगरता धनार्जने कृतकां वृत्तिमपि श्रयन्ति ते ॥४०॥
तदलं मधुराश्रयेण वो मयि सौहार्दपरेण गोधनाः ।
शिशुतैकपदाश्रया नृणां भरणे यौवनमर्थमास्पदम् ॥४१॥

सहजश्शिशुतादिपोषिणां वसतां चापि सहातिसौहृदम् ।
सहते न वियोगमञ्जसा स्वजनस्येति निसर्ग आत्मनाम् ॥४२॥
जननीजनकौ जनिप्रभृत्यतिखिन्नौ किल मद्वियोगतः ।
कियता समयेन तावुभौ जरठौ सम्मदयामि वासतः ॥४३॥
व्रजत व्रजमात्मनां हितं विविधावश्यकवस्तुवृद्धिकम् ।
अवनीतलनन्दनं वनं ननु बृन्दावनमेव सेव्यताम् ॥४४॥
इति कृष्णगिरो निशम्य ते निखिला नन्दमुखास्तु गोपकाः ।
व्रजमेव ययुस्सनाहितस्वहृदोऽनृतदृशः कथञ्चन ॥४५ ॥
वसुदेवगृहेऽनुजावुभौ बलकृष्णौ ललितैर्निजैर्भृशम् ।
जननीजनकावमानुषैर्नदयन्तौ सुखमूषतुः पुरि ॥४६॥
अथ कंसमियोपनायने समयं मुख्यमतीतमाहुकः ।
त्वरितस्त्ववगत्य संस्कृतौ गुरुगर्गं मुनिमानिनाय सः ॥४७॥
सतु गर्ग उपेत्य संस्क्रियाविधिवद्वेदविधानतो व्यधात् ।
बहुगोगणदानपूर्वकं वसुदेवो द्रविणं ददौ मुदा ॥४८॥
बलकृष्णयुगोपनायनोत्सवदिष्टे वसुदेव आत्मवान् ।
मधुराजनतामतर्पयन्मधुरान्नांशुकभूषणादिभिः ॥४९॥
द्विजतामधिगत्य रेजतुर्बलकृष्णौ महसा महीयसा ।
निगमाधिगतौ गुरोर्मुखाद्ययतुस्तावथ काशिकां पुरीम् ॥५०॥
इह साङ्गसमस्तवेदविद्वरसान्दीपनिसंज्ञकं मुनिम् ।
गुरुमार्तथतां श्रुतिव्रजं निजशाखान्वयनामबोधिनौ ॥५१॥
महसा महता समन्वितौ सतु तौ वीक्ष्य गुरुर्मुदा युतः ।
उषसि श्रुतिसंहतीरपीपठदङ्गानि च मध्यमेऽहनि ॥५२॥

निशि पूर्वचरित्रसंहृतीरपरस्यां पठितानुपाठनम् ।
इति पाठदिशा दिनेदिने गुरुरध्यापिपदात्तकौतुकः ॥५३॥
अतिमानुषमेधया श्रुतिग्रहणे गूढरहस्यवेदने ।
श्रुतिगांशधृतौ सुसूक्ष्मतोऽनुदितांशे च विसिष्मिये गुरुः ॥५४॥
अलसौ न कदापि कुत्रचिन्निजशुश्रूषणमुख्यवृत्तिषु ।
अतिलोकमहामहोऽञ्चितावमरौ छद्मनरावमन्यत ॥५५॥
अनया च दिशाऽप्रमत्तया स चतुष्षष्टिदिनेष्वपाठयत् ।
सकलाङ्गरहस्यसंयुतास्सुचतुष्षष्टिकलाश्च युग्मतः ॥५६॥
इह सोपनिषद्धनुश्श्रुतिं सरहस्यां विविधैर्विधानकैः ।
निखिलास्त्रसुशस्त्रयोगगां सुविशिष्टं समुनिस्त्वशिक्षयत् ॥५७॥
अथ सर्वकलानुशिक्षणे परिपूर्णे हरिरभ्यभाषत ।
सबलो गुरुवर्य दक्षिणां भवदिष्टां वृणु तां तु दद्महे ॥५८॥
बलकृष्णमहस्समीक्ष्य स त्रिदिवस्थावमराविमौ च न ।
हरिरेव जगत्क्रियाकृते स दधौ मूर्तियुगं सितासितम् ॥५९॥
मघवा गुरुसन्निधौ पुरा सुरमानेन सहस्रवत्सरान् ।
अपठत्किल शब्दतन्त्रकं न समाप्तं शृणुमस्त्विहाद्भुतम् ॥६०॥
सकलाङ्गरहस्यसंयुताः क्व चतुष्षष्टिकलाश्च तन्मितैः ।
दिवसैः पठितानु विष्टपे सरहस्यावगमं सुरासुरैः ॥६१॥
सकलाश्च कला हृदि स्थिता अनयोरस्मि निमित्तदेशिकः ।
इह सर्वजनैर्गुरोर्मुखादवगम्या इति तास्तु शंसतः ॥६२॥
अतिदेवमनुष्यमेधया शिवपूजामुखसद्गुणश्रिया ।
सकलैश्च विशिष्टलक्षणैर्हरिरेवात्मयुगं दधे ध्रुवम् ॥६३॥

हरिरेव न संशयोऽवनेर्भरमुद्धर्तुमवातरद् ध्रुवम् ।
मम वंशकरं सुतं मृतं पुनराहर्तुमयं क्षमोम्बुधौ ॥६४॥

सुतमेव लषामि दक्षिणां न धनादीनि तदर्थतामियुः ।
इति हृद्यवधार्य देशिकस्स ययाचे सुतमेव तौ मुनिः ॥६५॥

अयि वां परिचर्ययैव मे परितृप्तिश्चरितेन सद्गुणैः ।
अतिलोकमहामनीषयाप्यभवन्मास्तु ममान्यदक्षिणा ॥६६॥

युवयोर्हरिरूपयोः पुनस्त्विह साध्यं न परस्य कस्यचित् ।
लषितं हृदि चैकमस्ति मे शृणु तं वच्मि तदन्यनिस्पृहः ॥६७॥

मम वंशकृदेक आत्मजस्स तु तीर्थाटनगः प्रभासके ।
जलधौ तिमिना हृतो हतस्तमुपाहृत्य तु दत्तमङ्ग मे ॥६८॥

न धनेन मम प्रयोजनं नच वान्यैर्मणिभूषणादिभिः ।
परलोकसुखप्रदं सुतं भुवि वंशाय वृणोमि वां भृशम् ॥६९॥

गृहिणां तु महाधनं सुतस्सुतहीनाद्धि गृहाद्वरं वनम् ।
विविधाधिमुखावहात्सदा हृदि विश्रान्तिसुखप्रदं नृणाम् ॥७०॥

धनवानपि दुर्विधोऽस्तु वा सुतवक्त्रं प्रसमीक्ष्य मोदते ।
जगतीतलजीवसंहतेस्सकलायास्सहजो हरे गुणः ॥७१॥

स्वयमेव सुतात्मना यतो भवति प्रेमपरं तदात्मनि ।
मुकुरे मुखदर्शनं यथा स्वमतिप्रीतिकरं तथास्य च ॥७२॥

निजशैशवमुख्यविभ्रमाननुभूतानितरैस्स्वविस्मृतान् ।
शिशुताऽविदितानपि स्वकान् सुततोऽवाप्य परन्तु मोदते ॥७३॥

सकलासुमतां स्वजीविते नियतेच्छा सततं निसर्गजा ।
निजसन्ततिरूपतस्तु तां मतिमन्तस्त्विह साधयन्त्यहो ॥७४॥

व्यसनेष्वपि पुत्रदर्शनं हृदयाश्वासकरं नृणां भवेत् ।
निजवार्धकपोषणादिजं सुखमत्रार्थयते जनस्सदा ॥७५॥
परलोकहितैस्स्वकर्मभिस्तनयस्तारयते स्वमन्वयम् ।
पितरोऽपि लषन्ति सन्ततिं सततं स्वीयसुखार्थिनो दिवि ॥७६॥
असुतस्य शिवंकरा गतिः परलोके न भवेदिति श्रुतिः ।
सुसुतश्शुभदैस्स्वकर्मभिर्विधिलोकं नयते पितॄनिति ॥७७॥
निजभूगृहवित्तभूषणाम्बरमुख्यानि मयार्जितान्यथ ।
इतरोऽनुभवेदिति व्यथा धनिनस्सन्ततमङ्ग पीडयेत् ॥७८॥
अधनस्य च वार्धके गतिर्भविता केह परत्र नेति च ।
सततं हृदि कण्टकोपमं व्यसनं विध्यति मानसं सदा ॥७९॥
उभयत्र गतिं वृणोमि वां परमप्रेमपदं सुतं मम ।
न भवत्त इह क्षमोऽपरो लषितं साधयतां फलान्वितम् ॥८०॥
इति दीनगुरूक्तिसंहतिं प्रणिशम्याथ बलाननं हरिः ।
परिवीक्ष्य समेत्य सम्मतिं स सुतस्यार्पणमाश्रृणोन्मुदा ॥८१॥
अथ सागरमेत्यमाधवस्सममज्जान्तररिप्रमर्दनः ।
निजरूपमुपेत्य सागरस्स्थितवान् साञ्जलिबन्धमानतः ॥८२॥
अनुशाधि विधिं मम प्रभो इति पृच्छन्तमथाब्रवीद्धरिः ।
जलधे भवतीह कुत्र वा वद सान्दीपनिसूनुमाशु मे ॥८३॥
अथ कृष्णमभाषताम्बुधिस्तिमिना पञ्चजनेन रक्षसा ।
स हतोऽच्युत वेद्म्यतः परं भगवान्मानमिह प्रभो इति ॥८४॥
अथ पञ्चजनं विलोक्य तं करघातेन हरिर्जघान सः ।
न गुरोस्तनयं तु दृष्ट्वान्विदितं तद्दरमाददे विभुः ॥८५॥

रणरङ्गतलेषु यद्ध्वनिं समुपाकर्ण्य जहत्यरिव्रजाः ।
निजधैर्यमपास्तचेतसस्समरोत्साहमुपेतभीतयः ॥८६॥
भुवनप्रथितं महारवं समुपादाय सपाञ्चजन्यकम् ।
धृतमस्तकहस्तराक्षसव्रजदत्तं च महामणिव्रजम् ॥८७॥
महितार्घयुतं महाऽऽदरादुपहारं प्रतिगृह्य तुष्टहृत् ।
प्रययौ स तुरं यमालयं कृतिसाधी न विलम्बते कृतौ ॥८८॥
स विलोक्य यमस्समागतं हरिमानम्रशिराः प्रणम्य च ।
विविधैरुचितोपचारकैर्भृशमानर्च विनीत आत्तमुत् ॥८९॥
करणीयमिहानुशाधि मे स्मरणीयांघ्रिसरोरुह प्रभो ।
धरणीयधरातलस्य ते शरणीयं चरणं जगत्पतेः ॥९०॥
अथ कृष्ण उवाच देहि मे गुरुसान्दीपनिसूनुमाश्विति ।
मम धर्म्यमिदं किमु प्रभो मृतदानं त्विति सोऽब्रवीद्यमः ॥९१॥
पुनराह हरिः प्रतिश्रुतं गुरवे पुत्रसमर्पणं मया ।
विधिबद्धमिदं तु मास्तु ते मम वैधं प्रतियच्छ तं तुरम् ॥९२॥
तत आह यमो हरे भवान् श्रुतिधर्मावनदीक्षितो विभुः ।
सकलासुमतां स्वकर्मतः फलमाधातुमिह न्ययुंक्त माम् ॥९३॥
सुकृतस्य तु दुष्कृतस्य वा परिपक्वस्य फलानुभावने ।
प्रतिजीवमिहायुषः क्षये वपुषोऽपास्य धृता व्यवस्थितिः ॥९४॥
प्रतिजीवमनुप्रवेशने तनुषु स्वार्जितकर्मयोगतः ।
विधिनाऽऽयुरवधिर्येत तत्परिपूर्तौ किल मार्यते मया ॥९५॥
सुकृतं चिरजीवितं दिशेदधिकं दुष्कृतमल्पजीवितम् ।
परिपक्वकृतानुरूपतः फलमाप्नोति हि देहवान् सदा ॥९६॥

अयमल्पतरायुरास्थितस्तिमिरूपेण च रक्षसा हतः ।
प्रतिदानमहो कथं त्वोद्धिषिमुल्लङ्घ्य मृतस्य माधव ॥९७॥
इति कालवचो निशम्य तद्रुषितश्श्रीहरिराह तं पुनः ।
सुतदानमिह प्रतिश्रुतं गुरवेऽवोचमथापि वक्षि मे ॥९८॥
स्मर धर्मविशेषमन्तक त्वमदाः किं न पतिं नृपस्त्रियै ।
गतजीवितशेषमात्मना न मृकण्डोस्तनये विधिं नय ॥९९॥
मरणोन्मुखमात्रमत्यजो न मृतं कञ्चन कुत्र वाप्यदाम् ।
नहि धर्ममिहोत्सृजाम्यहं बलवांश्चेन्नय पश्य मे बलम् ॥१००॥
इति हसयमोक्तितो रुषा तमहन्पाणितलेन माधवः ।
स हरिं निजदण्डतोऽभ्यहन्नथ जाताजिरुरुर्भुजाभुजि ॥१०१॥
उभयोः प्रथनेऽतिदारुणेऽशनिघातं गिरिवद्यमो हरेः ।
विषहं करघातमुन्नयन्प्रतिपेदे शरणं नताननः ॥१०२॥
शिवशक्तिमवेदिषं पुरा भगवन्नद्य तवाऽविदं प्रभो ।
शरणं प्रतिपन्नमादरादव मां त्वद्गुरुपुत्रमानये ॥१०३॥
इति माधवपादपङ्कजं शिरसाऽऽच्छाद्य यथाऽतपत्रतः ।
प्रवदंस्तु परेतदेहकं यम आनीय गुरोस्सुतं ददौ ॥१०४॥
हरिपाणिपुटस्पृशिक्रियामहसः प्रेतशरीरमत्यजत् ।
निजरूपधरो गुरोस्सुतश्शुशुभे चातितरां स्वतेजसा ॥१०५॥
वयसाऽऽकृतितोऽपि तेजसा जलधौ मज्जनतः पुरा यथा ।
अभवत्त्वविशिष्टमीषदप्यथ तं देशिकसूनुमानयत् ॥१०६॥
निजभृत्यकयातुधानतः परिलब्धां मणिसंहतिं यमः ।
हरये स ददावुपायनं जयिने कृष्ण उपाददे च ताम् ॥१०७॥

अनुविश्य स काशिकां पुरीं समणित्रातमुपार्पिपत्सुतम् ।
गुरवेऽरिजयी हरिर्मुदा प्रतिजग्राह निधिं यथा गुरुः ॥१०८॥
चिरकालगतं सुतं पुनः प्रतिलब्धं निजवंशदीपकम् ।
प्रमदाश्रुपरीतनेत्रतः परिपश्यन्नपि दर्शनेऽक्षमः ॥१०९॥
निममज्ज चिरं स देशिकः परमानन्दसुधानिधौ परम् ।
नविसारयितुं बहिर्मनस्स शशाकाद्भुतकृत्यचिन्तनात् ॥११०॥
किमचिन्त्यमशक्यमद्भुतं जगतीनाटकसूत्रधारिणः ।
मृतजीवनमेतदूर्जितं विविधास्यद्भुतशक्तिसम्पदः ॥१११॥
अतिदैवमतीतमानुषं गुरुपुत्रार्पणमच्युतस्य तत् ।
प्रसमीक्ष्य महाद्भुतं जना मुमुदुस्तुष्टुवुरात्मभिर्भृशम् ॥११२॥
अभिवन्द्य गुरोः पदाम्बुजं समवाप्यानुमतिं च सादराम् ।
मधुरामुपतस्थतुः पुरीं बलकृष्णौ चरितश्रुतिव्रतौ ॥११३॥
समधिगतसमस्ताम्नायविद्याविशेषावुपहितजयलक्ष्म्याश्लेषशंसिस्वबाहू ।
उपगतबलकृष्णौ माथुरा मोदमाना अभिययुरखिलास्ते तूर्यकुम्भादिभद्रैः ॥
आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजो
यश्श्रीपुल्यउमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये श्रीमति वीरकृष्णविजये सर्गो द्वितीयो गतः॥११५॥

इति श्रीविद्वत्कविसार्वभौमीये श्रीवीरकृष्णविजयमहाकाव्ये
श्रीमदुग्रसेनपट्टाभिषेकादिगुरुपुत्रसमर्पणान्त-
कथानुवर्णनं नाम द्वितीयसर्गः
श्रीकृष्णार्पितो विजयताम् ॥

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## तृतीयस्सर्गः ।

प्रावेशयन्पुरजना मधुरां ततस्तौ तूर्यस्वनैर्विविधमङ्गलगीतनृत्यैः ।
कल्याणपूर्णकलशैः कुसुमाभिवर्षैः आनन्दवाङ्मयरवैर्बलदेवकृष्णौ ॥१॥

घण्टापथे लसति पार्श्वयुगस्थहर्म्यसङ्घोर्ध्वबद्धसुमदाममुखाभिरामे ।
हर्म्योर्ध्वगाभरणभूषितयोषिदालिसंवृष्यमाणसुमलाजसुगन्धचूर्णे ॥२॥

प्रष्ठत्वलिप्सुजनघर्षणजायमानकोलाहलध्वनिविमिश्रजयाभिघोषे ।
वेत्रिव्रजश्रमविनीतजनावमर्दरथ्याध्वमन्दगतिभृत्समयानवर्गे ॥३॥

वाराङ्गनाशुचिरसोज्ज्वलभावदर्शितौर्यत्रिकानुगयुवव्रजघर्षणाढ्ये ।
पौराङ्गनामणिगवाक्षविसार्यमाणसाकूतदृष्टिशरनिष्क्रयिदृष्टिसारे ॥४॥

व्यायामयोगनिजकौशलदर्शिबाहुशस्त्रादियुद्धगतिभेदसमीक्षकाढ्ये ।
स्वस्वार्हभूषणविभूषितवाजिनागबृन्दातिमन्दगतिचोदकसादिबृन्दे ॥५॥

उच्चैधृतातिशितखड्गमुखायुधादिज्योतिःप्रकाशितनभोन्तरपत्तिवर्गे ।
श्रीरामकृष्णजननादिकृताद्भुताढ्यवृत्तानुवर्णिभटगीतनिनादहृद्ये ॥६॥

श्रीकृष्णकालियफणाफलकैकपादनृत्याभिनेतृनिपुणत्वविलोकिलोके ।
भेरीमृदङ्गदरदुन्दुभिकाहलादिनादप्रतिध्वनितसर्वदिगन्तराले ॥७॥

पौष्पे रथे समुपवेश्य सिताश्वयुक्ते चित्रध्वजप्रसवपल्लवतोरणाढ्ये ।
उच्चैस्स्वरात्तविविधाभ्युदयप्रशंसिवेदप्रबन्धपठितृद्विजराजिताग्रे ॥८॥

सर्वाङ्गभूषणमहार्घनवाम्बराढ्यचूडादिमण्डितवधूगणभासिपृष्ठे ।
सौवर्णतन्तुरचिताच्छवितानलम्बिरत्नावलिस्तबकभासुरभूमिकाढ्ये ॥९॥

पार्श्वस्थसर्वगृहगामिमहापुरन्ध्रीनीराजनादिपरिकल्पितसर्वभद्रौ ।
तत्तद्गृहिप्रवरदत्तमहार्घमुक्ताकर्पूरहारमुखशोभितकण्ठदेशौ ॥१०॥
आत्मीयसौभगनिरीक्षणमुग्धचित्तपौराङ्गनाशितकटाक्षशरास्पदास्यौ ।
स्वानङ्गतापरिजिहीर्षुसुमेषुबद्धमूर्तिद्वयोपहितसौभगसम्पदाढ्यौ ॥११॥
सन्दृष्टयौवनरमापरिरम्भणेर्ष्यासम्भ्रान्तराज्यरमणीपरिगूढगात्रौ ।
आजानुलम्बिभुजयुग्मनटज्जयश्रीपौरोपदाग्रहणकल्पितपाणिपद्मौ ॥१२॥
तत्तत्पुरीगतविचित्रपरिष्कृतीव्यसौन्दर्यदर्शनविलोलदृशौ समन्तात् ।
स्मेराननौ पुरजनप्रसृतप्रसादसन्दर्शिदृष्टिकलितौ बलदेवकृष्णौ ॥१३॥
लाजाक्षतप्रसवकुंकुमगन्धचूर्णसञ्छिन्नदिव्यशिरसौ महनीयमूर्ती ।
निन्युः क्रमेण वसुदेवगृहं महेन पौरा मुदा विजयघोषनिरन्तरेण ॥१४॥
का नाम वामनयना कमनीयमूर्ती कल्याणपुष्परथमध्यसुखोपविष्टौ ।
दृष्ट्वा स्मरस्य जनकौ शुचिभावपूर्णा नान्तर्जगाम विकृतिं विवशा स्मरस्य ॥
श्रीदेवकी च वसुदेव उभौ दृढं तावाश्लिष्य वत्सलरसार्द्रहृदौ नितान्तम् ।
आनन्दबाष्पकलितौ पपतुर्दृशाभ्यामाघ्राय मूर्धयुगलं सुचिरं न तृप्तौ॥१६॥
पप्रच्छ तौ स वसुदेव उभौ कुमारावाम्नायजालमखिलाङ्गयुतं त्वधीतम् ।
शुश्रूषयाऽभिमतदक्षिणया च किं वा सन्तर्पितो गुरुवरस्समभूत्प्रसन्नः ॥
आस्ते गुरुस्सुखमये किल काशिकायां सान्दीपनिर्विदितसर्वकलारहस्यः ।
तत्त्वं कलासु सकलास्वपि वामबोधि वत्साविति प्रमुदितोऽथ हरिर्बभाषे ॥
आस्ते सुखं गुरुरशेषकलारहस्यजालं यथावदुपदिष्टमनुग्रहेण ।
नाकांक्षिता मणिसुवर्णमुखस्वरूपा सद्दक्षिणा मृतसुतानयनातिरिक्ता॥१९॥
अम्भोनिधौ तिमिहतं चिरतो मृतं च सूनुं त्वयाचत कुलोद्धरणाय विद्वान् ।
वैवस्वतस्य सदने स्थितमात्मशक्त्या त्वानीय तं समुपजीव्य पितस्तथादाम् ॥

दत्तैर्यमेन मणिभिस्सह दत्तमात्मपुत्रं यथा स्थितमुपेत्य भृशं स तृप्तः ।
आशीर्भिरार्य बहुभिस्त्वभिनन्द्य युष्मत्सान्निध्यमाप्तुमनुमानितवान्गुरुर्नौ ॥
आकर्ण्य कृष्णगदितं गुरुपुत्रदानवृत्तं महाद्भुतमनन्यवशं जगत्सु ।
आनन्दमाप्नुयुरशेषजना इहत्याः कीदृग्विधं क इह वर्णयितुं क्षमेत॥२२॥
पश्चात्सुखं न्यवसतां बलरामकृष्णौ गेहे पितुः कियनेदहसमाप्तकामौ ।
क्षोणीगतेन्द्रनगरायितसर्वभूतिभोगैकधाम्नि मधुरानगरे मनोज्ञे ॥२३॥
मन्दाकिनीव यमुना परितोनुवेलमाश्लिष्य रक्षति सुतां पयसेव नित्यम् ।
यामाश्रिता बुधवरा द्विजरूपभाजः आम्नायकर्मविधिभूतलताविशेषात् ॥
सुक्षत्रिया यदुकुलाभरणायमानाः शूराग्रगा धनुरुपश्रुतितत्त्वविज्ञाः ।
बाहुद्वयाश्रितजयश्रिय आत्मवीर्यै रक्षन्ति यां नयविदस्स्वकलाविशेषात् ॥
नानानिधिप्रवरदत्तविभूतिभोगभाजं विशः परिहसन्ति तु राजराजम् ।
यत्र स्वबुद्धिबलतोऽर्जितभूतिभाजः वाणिज्यमुख्यविधिभिस्सततप्रमोदाः ॥
शूद्रास्स्ववृत्तिनिरतास्सुरगोद्विजादिभक्ताः कृषिप्रमुखलब्धसुजीविकाढ्याः ।
शुश्रूषया च विधिलब्धधनेन तृप्ताः आनन्दमत्र मनुजाप्यमलं भजन्ते ॥
यत्र स्त्रियस्समभिवीक्ष्य सुराङ्गनास्ताः स्वाभ्योऽतिसौभगवतीरतिलज्जितास्याः।
विन्यस्य नेत्रयुगलेषु निमेषयोगं व्यावर्तकं द्युसद एव भवन्ति नित्यम्॥
रम्भादिदिव्यपरिरम्भणकामुकत्वं पुंसां निवारयति रूपमुखैर्विशेषैः ।
आनन्दमात्मजमुखैरिह मानुषं च स्त्रैणो ददत्सुविशिनष्टि दिवो यतोऽयम्॥
शुद्धान्तयोषिदमलास्यपरीक्षणाय जालान्तराप्तशशिनं समवेक्ष्य वामाः ।
दोषार्हशिक्षणधियाऽञ्जनलेपमास्थन् तद्धूमङ्कमधुनापि वदन्ति लोकाः ॥
हर्म्योर्ध्वभूमिगृहभूषणमध्यभागसञ्चारिणीस्सुगृहिणीर्निजबालकानाम् ।
आनंदिनीर्विविधखेलनसंविधानैः दृष्ट्वा व्रजंति दिविजस्त्रिय आत्तदैन्याः॥

उद्यानकेलिकुतुका युवभिर्वधूट्यः सायं स्वबाप्पशकटादिभिराशु गत्वा ।
तत्तल्लतातरुविशेषगसौभगादि दृष्ट्वाऽतिनन्दनमिदं न्विति यान्ति तुष्टाः ॥
श्रीदिव्यभौमविदितप्रसवाभिरामवल्लीनिकुञ्जविटपिव्रजभासुरैर्या ।
आक्रीडकैस्सुबहुलैरलकादिनाकलोकाश्रिता हसति चैकवनाः पुरस्ताः ॥३३॥
घण्टापथान्युभयपार्श्वगहर्म्यवीथीशृङ्गाग्रविश्रमिविमानिविराजितानि ।
नानाविधापणसुलभ्यसमस्तवस्तुविस्तारभाञ्जि विलसन्ति मणिप्रदीपैः ॥
क्रीडन्ति पौरनिवहा मणिभिर्विनोदक्रीडास्स्वहर्म्यविततौ सततं प्रमोदात् ।
सर्वत्र संव्यवहृतौ तु सुवर्णमुद्रामुक्तादिभिर्भवति यत्र जनस्य नित्यम् ॥
यत्र स्थिता गृहिजना भुवनत्रयीस्थभोगानुभूतिपरितृप्तहृदो नितान्तम् ।
स्वर्गादिलोकगतभोगविशेषसूक्तीः वैयासिकीरतिशयेन कृता विदन्ति ॥
यत्रापणेषु मणिमौक्तिकविद्रुमाद्याः रत्नाकरं स्वलवणोदकमात्रशेषम् ।
आवेदयन्ति सकलाप्यसमस्तवस्तुरत्नाकरेषु सततक्रयविक्रयेषु ॥३७॥
को वा कविस्त्रिभुवनस्थितराजधानीसौभाग्यसर्वमधुरां मधुरां पुरीं ताम् ।
नाम्नार्थतोऽपि भुवि वर्णयितुं क्षमेत यां श्रीहरिस्स्वयमतीव मुदाऽध्युवास ॥
उद्यानभूविहरणैस्सुविनोदसौधक्रीडाविशेषविधिभिर्नगरीविहारैः ।
राज्ञस्सभासु नयमार्गविमर्शनाद्यैः तौ निन्यतुर्बलहरी तु कियद्दिनानि ॥
प्राप्तिस्तथाऽस्तिरिति कंसकवल्लभे द्वे पुत्र्यौ तु मागधविभो रमणीयमूर्ती ।
ते कंसघातमतिदीनगिरौ हरेस्तं पित्रे समूचतुरलं रुषमावहन्त्यौ ॥४०॥
बार्हद्रथो विजयते किल राजराजः वीरो वशीकृतमहोन्नतराजलोकः ।
केनाप्यजय्य इह शस्त्रभृताऽस्त्रवेत्ता यस्संहितो हि जरया स जरासिन्धः ॥
जामातृकंसवधवृत्तमिदं निशम्य पादाहतः पथि यथा किल कृष्णसर्पः ।
उग्रो भवन्प्रतिकृतौ प्रयतेत तद्वच्छ्रीकृष्णसंहृतिकृतौ हृदि निश्चिकाय ॥

सोयं रणोद्यत उदीतमहारुडग्निज्वालस्समस्तनृपतीनपि चाजुहाव ।
युद्धाय सैन्यसहितास्तुरमाज्ञया सन्नद्धा उपेत न विलम्ब्यमिति स्म दूतैः ॥
यस्यावलम्बनमुदीक्ष्य स दुष्टकंसः सम्बध्य चात्मपितरं परिभूय चान्यान् ।
सर्वान्यदून्नृपपदं स्वयमाचकर्ष सेहे न चापि वसुदेवसदूपदोहम् ॥४४॥
यद्वीर्यमात्मसु विचिन्त्य रणाङ्गणेषु राजान उत्कटभिया व्यपनीतधैर्याः ।
नीराजयन्ति नतमौलिमणिप्रदीपैः पादारविन्दयुगलीं करशीर्णशस्त्राः ॥
यस्य प्रसादमखिलेश्वरसत्प्रसादं यद्रोषमात्मविलयोज्ज्वलरुद्ररोषम् ।
सञ्चिन्त्य भक्तिभयविह्वलचेतसो यं सर्वे च राजनिवहास्सततं श्रयन्ति ॥
तस्यानुशासनमुपेत्य महामहिम्नो बार्हद्रथस्य चतुरङ्गबलैरुपेताः ।
श्रीरुक्मिचैद्यधृतराष्ट्रसुतादिसर्वयोधाग्रगा नृपतयो रणकर्कशास्ते ॥४८॥
बार्हद्रथोऽम्बुनिधितुल्यबलैरुपेतः सामन्तराजसहितस्ससुहृत्सबन्धुः ।
अयातवान् स मधुरानगरीं नियोद्धुं उद्यानकाननतले निविवेश बाह्ये ॥
घीङ्कारनादनिवहैर्मदकुञ्जराणां हेषारवैर्हयततेः रथचक्रशब्दैः ।
संक्ष्वेलनैरपि पदातिततेस्समन्तात् आशाः प्रतिध्वनयतातु निशाऽत्र निन्ये॥
आकर्ण्य सैन्यनिनदं यदुपुङ्गवास्ते प्रष्ठं विधाय हरिमैक्षिषतारिसेनाम् ।
वेलामतीत्य पतितं भुवि सागरं वा संघूर्णयन्तमतितुङ्गतरङ्गजालैः॥५०॥
आलोक्य सैन्यमभितो मगधाधिपस्य जामातृकंसहननापचितिं विधातुम् ।
प्राप्तस्य बन्धुसुहृदोऽपि च शूरवर्यान् राज्ञो बहूनथ हरिर्बलमाबभाषे ॥
रामाऽभिपश्य बलमस्य तु मागधस्य राज्ञोऽपि नस्त्वरयतीह हि देवकार्यम् ।
राज्ञां रथेषु विलसन्ति सितातपत्रदीव्यद्ध्वजाग्रततयस्त्विव हंसवीथ्यः ॥
काले बृहद्रथसुतस्समुपेतवान्नो युद्धातिथिः प्रथम उद्भटराजबृन्दैः ।
दृष्टोऽतिसैन्यनिवहैश्चतुरङ्गयुक्तैः एनं त्वमीव इह राम रणातिशौण्डम् ॥

पश्याव उद्धृतमिदं बलमस्ति कीदृक् सम्यग्विमृश्य कियदित्यथ कार्यभूमौ ।
आर्य प्रदिश्व इति तत्सकलं च सैन्यं प्रापश्यतां नयदृशा बलरामकृष्णौ ॥
आत्मन्यमन्यत हरिर्नृपतीन् समीक्ष्य सम्प्रोक्षितास्सह बला इह मृत्युनेमे ।
भारो भुवो ह्रियत एव बलाव लिप्तभूपालकोपहृत आगत एष कालः॥५५॥
स्वर्गं प्रयान्ति रणरङ्गहता निकामं कालेन चैव तनुना विजना धरित्री ।
एते नृपास्सहबलाश्शतशो धरण्यां सम्पातितास्स्युरतिथिः प्रथमोऽयमाप्तः॥
मत्वैवमात्मनि हरिस्सहितो बलेन दृष्ट्वा बृहद्रथसुतस्य बलं समन्तात् ।
तैस्तैर्जगाम भवनं तु यदुप्रवीरैः युद्धोत्सुको यदुवरानभिचोदयन् सः ॥
बार्हद्रथोऽपि शिबिरे स निनाय रात्रिं तां सैनिकैस्सुपरिवार्य पुरीं समन्ताद् ।
हस्त्यश्वमुख्यनिनदैः ककुभश्चतस्रः सङ्घोषयन्रणमुखं सुनिरीक्षमाणः ॥५८॥
प्रातः परेद्युररुणे नलिनीं कराग्रस्पर्शैर्विकासितमुखीं विदधत्यभीक्ष्णम् ।
स्माराद्रणादलसयोस्सुखसुप्तयूनोः निद्रासुखानुभवभङ्गकृति प्रकामम्॥५९॥
जीवान्प्रबोधयति चात्मकृतिप्रवृत्तौ भावान्विशोधयति चाखिलचित्तराशेः ।
हावान्विमुञ्चयति कामिजनेन गार्ह्यसेवारतान्नयति पुंस इह स्त्रियोऽपि ॥
धर्मेषु वर्तयति नैगमिकेषु कांश्चित् अर्थेषु चात्मविहितोचितवृत्तितोऽन्यान् ।
स्वस्वोदरार्हभृतिनिर्वहणाय सर्वान् गृह्यार्थनिर्वहणगास्सकलास्त्रियश्च ॥
विज्ञानदिव्यमहसा निजशिष्यहृत्स्थमज्ञानमार्यगुरुवद्गुरुमाययासम् ।
विध्वंस्य रात्रिविहितं तिमिरं स्वभासा लोकं प्रकाशयति विश्वविलोकयित्र्या॥
दुग्धासु गोष्वपि हुतेषु धनञ्जयेषु ध्यातेष्वभीष्टदिविजेषु च वर्णिसङ्घे ।
वेदं पठत्यविरतं गुरुसत्कुलेषु बार्हद्रथोऽकृत सभां रणमन्त्रणार्थाम् ॥६३॥
उष्णीषधारिण इह प्रतिहारिणस्ते सत्कञ्चुकाधृतसुवेत्रकरा नृपाणाम् ।
श्रेण्यन्तरेषु परितस्समितौ भ्रमन्तः मा शब्द इत्यथ जनस्य रवं न्यरुन्धन् ॥

क्रोधारुणाक्षियुगलो मगधाधिनाथः प्रोवाच तत्र सकलान्नृपतीनवेक्ष्य ।
जातं हि वृत्तमखिलं विदितं भवद्भिः यद्गोपबालकयुगेन कृतं मदेन॥६५॥
यद्यच्च केशिहननान्तमरण्यमध्ये बाल्यादितः कृतममानुषकर्मजातम् ।
ताभ्यां सुविस्मयकरं जगतो निशम्य क्षान्तं मया तदखिलं शिशुतामवेक्ष्य ॥
कंसं जघान परमासनसन्निविष्टं केशग्रहेण सदसीति रणं विहाय ।
जामातरं मम नृपास्तदिदं कथं नु क्षन्तव्यमस्त्यपचितिं तु विना वदन्तु॥
तौ गोपकौ निशितबाणशतैर्मदीयैः यौ रामकृष्णपदसंव्यवहारभाजौ ।
नीत्वा यमस्य सदनं प्रतिकृत्य तूर्णं हार्दीं व्यथामपनयाम्यथ कंसघाते ॥
गोपालवृत्तिकलितो वनमध्यवासो विख्यातवीरपरिपालितराजधान्याम् ।
चापोत्सवे बहुजनावृतरङ्गभूमौ भद्रासनस्थमवधीद्धत सुप्रमत्तम् ॥६९॥
शूलं हृदीदमिह यत्तु कचग्रहेण संकृष्य मारणमिति व्यथयत्यभीक्ष्णम् ।
दोर्दण्डमण्डलपरिभ्रमणप्रचण्डकोदण्डकाण्डततिखण्डितबाहुदण्डौ ॥७०॥
उद्दण्डमण्डनमुखे खरखड्गधाराकृत्तोत्तमाङ्गयुगलौ विनिपात्य भूमौ ।
शूलं तदङ्गहृदयादहमुद्धरेयं रुन्धन्त्विमाममरिपुरीं मधुरां समन्तात् ॥७१॥
पाषाणयन्त्रनिवहैरपि मुद्गरैश्च भूमिं समां कुरुत सिञ्चत वारिकुम्भैः ।
प्रासांश्च तोमरगणानपि चापवर्गान् दुर्गोर्ध्वभागमनुयापयताविलम्बात् ॥
टंकैश्शितैरपि खनित्रमुखैस्समन्तात् भूमिं विदारयत मामकशासनेन ।
रन्ध्रेषु सर्वत इमामभिरुध्य सैन्याः रुन्धन्तु माधुरपुरीमभियुद्धनद्धाः ॥७३॥
द्वारन्तु पश्चिममिमे मधुरानगर्याः रुन्धन्तु मद्रपकलिङ्गनृपालमुख्याः ।
काश्मीरभूपतिमुखा बलवद्बलैस्स्वैः अक्षीणलक्ष्यबलवीर्यसुशिक्षणाढ्यैः ॥
द्वारं निरोध्यमिह तूत्तरमप्रमत्तैः तैरुक्मिदन्तमुखपौरवमुख्यभूपैः ।
प्राग्द्वारमत्र तु निरोध्यमुलूकशल्यसत्कौरवादिभिरलं सुदृढप्रयत्नैः ॥७५॥

द्वारं तु दक्षिणमहं दरदश्च चैद्यो रुक्मः पुरं सकलमुक्तदिशाऽवरुध्य ।
वज्रप्रपातजमिवाखिलमाथुराणां उत्पादयाम भयभङ्ग महद्यदूनाम् ॥७६॥
ते ते गदापरिघमुख्यनिजायुधैश्च सर्वां पुरीं क्षितिसमां कुरुतातितूर्णम् ।
सर्वे विधाभिरखिलाभिरिमां निरुध्य युध्यन्तु शौर्यपरिदर्शिन उग्रधाम्ना ॥

इति नगरनिरोधं मागधो भूपतिभ्यः
तदनु समनुशिष्य क्रोधमूर्छावशात्मा ।
समधिकचतुरङ्गानीकयुक्तोऽतिशूरो
यदुगणमुपयोद्धुं यातवानत्युदग्रः ॥७८॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजः
यश्श्रीपुल्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये श्रीमति वीरकृष्णविजये सर्गस्तृतीयो गतः ॥७९॥

इति श्रीविद्वत्कविसार्वभौमीये श्रीवीरकृष्णविजयमहाकाव्ये
मधुराप्रवेश जरासन्धयुद्धोद्यमाभिवर्णनं नाम
तृतीयस्सर्गः
श्रीकृष्णार्पितो विजयताम् ।

---

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## चतुर्थस्सर्गः ।

पश्चाद्बृहद्रथनृपात्मजशासनेन ते ते नृपास्सहबलैर्मधुरां निरुध्य ।
दुर्गाधिरोहणमुखैर्विविधप्रकारैः प्रारेभिरे प्रथनमुक्तदिशायुधैस्स्वैः ॥१॥

भेरीमृदङ्गपटहादिरणावमर्दप्रोत्साहिवाद्यनिवहेषु नदत्सु भूम्ना ।
वीराभिलापगजबृंहितवाजिहेषाव्यामिश्रघोषबधिरीक्रियमाणदिक्काः ॥२॥

ते यादवा अभिययुर्मगधाधिनाथसैन्याम्बुधिं हरिमगस्त्यमिवाश्रयन्तः ।
रामं द्वितीयमपि तं चतुरङ्गयुक्ताः शूराग्रगाः प्रथनपण्डितपुण्डरीकाः ॥

बार्हद्रथस्य बलमत्यधिकं समीक्ष्य सन्त्यज्य पत्तनमुभौ बलरामकृष्णौ ।
बाह्यं रणाङ्गणमुपेयतुरायुधैस्स्वैः स्वस्यन्दनोपरि यथेन्दुरवी बलिष्ठौ ॥४॥

निष्पारमागधबलाब्धिविलोडनोत्कौ ग्राहाविवात्मबलतो बलरामकृष्णौ ।
संवीक्ष्य संस्मरतुरात्महृदोस्स्वहेतीः प्रत्ता दिवोऽथ रथमध्यमुपाययुस्ताः ॥

ता राजरक्तपिशिताशनतृष्णयेव ज्वालाकरालवपुषः परिलेलिहानाः ।
स्रक्चन्दनादिपरिमण्डितमूर्तिभाभिराशास्समादहशतुः परिदीपयन्तीः ॥६॥

संवर्तकं हलमथो मुसलं बलस्सः सौनन्दसंज्ञमरिभीकरमाददे द्वे ।
जग्राह शार्ङ्गमपि चापमतिप्रसिद्धं कौमोदकीसमभिदां स गदां हरिश्च ॥

दिव्यायुधद्वयधरौ करयुग्मतस्तौ आत्मीयवैष्णवमहः परितः किरन्तौ ।
युद्धोत्सुकारिनृपमण्डलहार्दधैर्यं धाम्नैव यन्त्रत इवाददतुः प्रकामम् ॥८॥

पश्चाद्धलोऽतिरुषितस्स्वहलेन हस्तियूथान् हयात्रथसमूहमपि प्रकर्षन् ।
विध्वा निजेन मुसलेन निहत्य वेगात् युद्धाङ्गणं सविदधौ हतवृन्दकीर्णम्॥

दृष्ट्वा नृपा हलिनमुग्रमिवाऽन्तकाले व्यग्रं समस्तबलसंहरणे नितान्तम् ।
भीतास्स्वजीवितवितृष्णहृदः प्रधाव्य याता बृहद्रथसुतं शरणं तु सर्वे ॥
तान्वीक्ष्य सङ्गरतलापगतात्मवृत्तान् आर्तान्जगाद नृपतीन्मगधाधिनाथः ।
क्षात्री हि वृत्तिरियमङ्ग विगर्हणीया कातर्यतो रणमुखादपवर्तनात्मा॥११॥
यः क्षत्रियो रणमुखाद्भयतोऽपगच्छेत् यो वा रणाद्विरथ आशु पलायते वा ।
द्वौ भ्रूणघातिसदृशौ प्रवदन्ति वृद्धाः युद्धाय गच्छत पुनर्निजतेजसाऽऽत्ताः॥
नोचेत्सुपश्यत रणं बलदेवकृष्णौ हन्म्येक एव महसाहमिहात्मशस्त्रैः ।
तिष्ठन्तु वीक्षकपदे विहितात्मशस्त्राः क्षात्रं महो यदि निदर्शयताथवाऽऽजौ॥
एवं प्रबोधनबलान्मगधेश्वरस्य सर्वे स्वशौर्यमुपगम्य रणोत्सुकास्ते ।
भूयो गृहीतनिजशस्त्रबला रथादियानस्थिता युयुधुरात्ममहोऽनुरूपम् ॥
अत्रान्तरे निजरथे गरुडध्वजे स आसीन आत्तरुडुपेत्य हरिर्जवेन ।
बार्हद्रथस्य रथसूतमलं जघान बाणाष्टकेन शरपञ्चकतस्तदश्वान् ॥१५॥
प्राप्तापदं समभिलक्ष्य तु मागधं तं सूताश्वनाशत उपेत्य स चित्रसेनः ।
सेनाधिपश्च स तु कैशिक आत्तवेगौ तौ जघ्नतुश्शितशरैर्हरिमात्मदृप्तौ ॥
पश्चात्स कैशिक इषुत्रितयेन नीलचेलं जघान निशितेन बलोऽथ दीप्तः ।
भल्लेन तस्य धनुरुग्रमरं चकर्त खण्डद्वयात्मकमथेषुगणं ववर्ष ॥१७॥
कृष्णं ततो नवशरैस्स तु चित्रसेनः पञ्चेषुभिश्शितशरैस्स तु कैशिकोपि ।
सप्तेषुभिर्मगधनाथ उदीर्णरोषः आविध्यदच्युत इषुत्रितयैश्चकर्त ॥१८॥
पञ्चेषुभिस्त्वथ हली स तु चित्रसेनयानं रथं द्रुततरं विबिभेद चापम् ।
भल्लेन चाच्छिनदथो विरथो विधन्वा धृत्वा गदां बलमभिद्रुतवान्स वेगात्॥
तं चित्रसेनमभिहन्तुमथोद्यतस्य चापं बलस्य मगधेश्वर आचकर्त ।
रथ्यान् हयानपि जघान गदाप्रहारैः हन्तुं च सोऽयत ततं हलिनं रुषात्तः ॥

दृष्ट्वा बृहद्रथसुतं स्वजिघांसुमार्तं सौनन्दतोऽभिगतवान्मुसलायुधोऽसौ ।
घोरो रणः प्रववृते हरिवृत्रतुल्यः स्वस्वायुधैर्मिथ उदीतरुषोर्जिघांस्वोः ॥
तत्रापवार्य मगधेश्वरमात्तरोषो भिन्नं रथं समधिरुह्य स चित्रसेनः ।
स्वां दर्शयन्निपुणतां युधि हेतिवर्यैः कृष्णाग्रजं तमभियाय युयोध तीक्ष्णम् ॥
बार्हद्रथोऽथ पृथुसैन्ययुतस्सभोजान् अभ्याप रोषदहनं सुवमन्मुखेन ।
तीक्ष्णायुधैस्सह महोग्रकटाक्षपातैः कल्पान्तरुद्रइव भूरिभयोपघायी ॥२३॥
गर्जन्त ऊर्जितरवैर्मिथ आयुधैस्स्वैः नानाविधैरुभयपक्षगता निकामम् ।
जघ्नुर्निजासुविगतस्पृहसाहसाढ्याः सैन्यास्समं रथिहयीभिपदातिवर्गाः ॥
घोरेऽत्र संकुलरणे महति प्रवृत्ते कः कं निहन्ति कथमित्यवबोधशून्ये ।
भिन्ना द्विधा सकलयादवसैन्यसङ्घाः अर्धार्धतो हलिहरी श्रितवन्त आजौ ॥
पक्षं तु दक्षिणमुपेत्य जराभिसन्धचैद्याभिरक्षितमुदीच्यनृपालवर्यैः ।
शल्यादिभिर्युयुधुरुग्रतरायुधैस्ते रक्ष्या बलेन हलिना यदुवंश्यवीराः ॥२६॥
श्रीकृष्णरक्षणगतोत्तरपक्षभाजः ते यादवास्तु पृथुकङ्कमुखाः प्रवीराः ।
प्राग्दक्षिणापथगभीष्मकरुक्मिमुख्यैः शूरैर्नृपैः प्रयुयुधुस्सहसातिधैर्यात् ॥
व्यूहाश्रिताः कतिचिदर्थगतास्तु तत्र योधाग्रगाः प्रथितसात्यकिचित्रकाद्याः ।
शूराग्रगण्यमृदुरप्रभुरक्ष्यमाणश्रीवेणुदारिमुखराजिवरैरयुध्यन् ॥२८॥
श्रीकृष्णरुक्मिगदचैद्यकशंकुदन्तवक्त्रादियुग्ममुखतो मिथ आत्तशस्त्राः ।
जघ्नुर्जिगीषव उपात्तबहुप्रकारा रोषानलोज्ज्वलमुखा युधि तीव्रवेगाः ॥
त्यक्तस्पृहेष्वसुषु दारुणशस्त्रघातैः युध्यत्सु योधनिवहेषु मिथो नृपेषु ।
द्वन्द्वक्रमेण च सरूपदिशा च सादिष्वायोधने रथगजाश्वमुखैर्महोग्रम् ॥
रामं तदा त्वभिययौ मगधाधिनाथः क्रोधोग्रवीक्षणशतैस्सह तीक्ष्णशस्त्रैः ।
देवेन्द्रवृत्त्ररणवद्बहुदारुणोऽयं जातो रणोऽसुहरणाय मिथोस्त्रशस्त्रैः ॥३१॥

आयोधनावनिरियं रुधिरस्रवन्त्या सम्प्लावितापि शितकर्दमया महत्या ।
भिन्नोरुकाण्डभुजदण्डपिचण्डपिण्डमूर्धाहिनक्रकमठादिभृता समन्तात्॥३२॥
रामोऽपि मागधमभिप्रययौ निजास्त्रशस्त्रादिभिश्शिततरं रथगो जिघांसुः ।
पश्चात्तयोः प्रथनमुग्ररुषोर्मिथोऽभूत् श्रीरामरावणवदुग्रतराग्रहेण ॥३३॥
अस्त्रैर्बभूव समरस्समरंहसात्तैः प्रत्यस्त्रतः प्रतिहतैर्विविधैः पुरस्तात् ।
शस्त्रैस्तयोरथ मिथो रथवाजियन्तृघातेन तौ तु विरथौ क्रमशोऽवनिस्थौ ॥
उद्रिक्तविक्रमधृतात्मगदौ प्रचण्डदोर्दण्डमण्डलपरिभ्रमणोग्रवेगौ ।
अन्योन्यरन्ध्रहतिदर्शितपाण्डितीकौ सञ्चेरतुर्युधि समं हलमागधौ तौ ॥
तौ द्वौ गदासमरपण्डितपुण्डरीकौ शुण्डात्तदण्डत इवोत्कटगन्धनागौ ।
तत्तद्गतिभ्रमणमण्डलमार्गभेदैः साम्येन जघ्नतुरलं तु मिथोऽन्तरेषु ॥३६॥
न श्रान्तिरीषदुभयोर्न पराङ्मुखत्वं स्वेदोद्गमो न जवहैन्यमुतालसत्वम् ।
उत्सृज्य युद्धमपरे त्वनयोर्जिघांस्वोः पश्यन्ति चण्डरणपण्डितभण्डनं तत् ॥
देवाश्च सिद्धनिवहाश्च महर्षयश्च गन्धर्वकिन्नरमुखाश्च विमानसंस्थाः ।
तारापथे भगणवद्विलसन्त आजिमद्राक्षुरात्तकुतुका गदिनो रणं तम् ॥
सव्यात्तमण्डलपथेन जराभिसन्धो रामस्तु दक्षिणसुमण्डलमार्गतोऽपि ।
मातङ्गवद्दशनतोऽतिमदेन रोषात् स्वाभ्यां निजघ्नतुरुभौ सजवौ गदाभ्याम्॥
अन्योन्यगर्जनरवप्रतिनादिताशौ चातुर्यदर्शिबहुमण्डलमार्गगौ तौ ।
पादाहतिव्रजविकम्पितभूमिपृष्ठौ शृङ्गोन्नताविव गिरी चरतश्चरन्तौ॥४०॥
तत्रान्तरे मगधराजपदे जघान दीर्घद्विरीन्द्ररवराविणमुच्चघातम् ।
रामः प्रचण्डगदयाऽशनिना महीध्रपक्षे महेन्द्र इव तीव्रजवेन गर्जन् ॥
सेहे स मागधपतिर्हलिनः प्रहारं कृच्छ्रेण शिक्षणबलेन बनले चैतम् ।
पश्चात्सचापि गदया हलिनं जघान तं लाङ्गलीषदपि नाजगणत्प्रहारम् ॥

एवं विशिष्टबहुमण्डलमार्गभेदैः चित्रैर्गदासमरकौशलदर्शिनौ तौ ।
विश्रम्य कञ्चिदलसौ समयं धरायां भूयो रणाय समुपाक्रमतां बलिष्ठौ ॥
उत्साहशक्त्युदयगौ विमुखत्वदूरौ अन्यासुकर्षणपरात्मदृशौ मिथस्तौ ।
शूराग्रगौ युयुधतुस्ससमुग्रवेगौ अन्यान्तरप्रणिहितेक्षणपातयुक्तौ ॥४४॥
पश्चाद्बृहद्रथसुताढ्यगदाहवस्थपाण्डित्यविभ्रमविशेषमवेक्ष्य रामः ।
वध्यो मया न गदया रणचण्ड एष इत्यात्मनोऽप्रतिहतं मुसलं दधार ॥
उद्रिक्तरोषजरयोद्धृतबाहुदण्डवम्भ्रम्यमाणमुसलं स यदा प्रयोक्तुम् ।
उद्युक्तवान् दिवि तदा श्रुतमस्य राम मृत्युः परादरमितो विरमोज्झ खेदम्॥
वाचं निशम्य स हली विरतः प्रयोगे वार्हद्रथोऽपि विमना विजहौ गदां सः ।
उत्साहशक्तिरिह कर्मसु चोदयित्री सर्वेषु सा यदि भवेन्न कथं प्रवृत्तिः ॥
असायमन्यनृपयोधगणाः प्रजह्रुः पक्षद्वयेऽप्यभिनिवेशत आयुधैस्स्वैः ।
श्रीरुक्मिणीं हृदि निधाय न रुक्मिणं तं कृष्णो जघान तदिषुव्रजवारकोऽभूत्
श्रीरामकृष्णहननोद्यतमागधोद्यदुत्साहवद्रणमुखे द्युवचश्श्रवेण ।
सूर्योऽस्तमैत्स्वशिबिराणि नयंस्तु योधान्नीडान्शकुन्तनिवहानिवयुद्धरङ्गात्॥
नानाविधार्थविधिनिर्वहणप्रवृत्तान् सर्वान्नयन्गृहिण आत्मगृहान्जगत्याम् ।
सन्ध्याविधेयविधिसम्भ्रममादधानो धर्मिद्विजातिविततेः प्रतिवेश्म चापि ॥
पाकादिकर्मसु च बालकभोजनादौ व्यापारयन्प्रतिगृहं वनिताश्च काश्चित् ।
शय्याविधानसुमदामशिखादिबन्धभूषापरिष्करणमुख्यविधिष्विहान्याः ॥
उद्रेचयन्मदनवैकृतमात्महृत्सु क्रीडाविशेषविधिमानिषु कामिनीनाम् ।
आलोकनैः प्रियगतैश्शुचिभावपूर्णैः उद्वेजयन्निजविभिन्नविधेयजाले ॥
गा दोहयन् सकलशोषु पयस्विनीस्ताः तृण्यादिदाननिरतैश्च पशुभ्य एकैः ।
गोपैः कृषीवलगणान्विरतात्मवृत्तान् केदारतोऽर्थनिवहं निनयन्गृहेभ्यः ॥
जीवोदयस्थितिलयान्नियतान्जगत्यां आत्मोदयास्तगतिभिः प्रतिनित्यमद्धा ।
सुव्यञ्जयन् सकलजीवततेर्नितान्तं विश्रान्तिसौख्यमुपयन्निजवृत्तिजाले ॥

संसारतापमपि जङ्गमजीवजातेः संवर्धयन्निजकरैरिव तापमुग्रम् ।
स्वीयोदयप्रभृति च क्रमशोऽधिसार्यं तापं स्मरे समधिरोप्य वियुक्तवेधी ॥
आत्मोदयादि जगतीं महसा विभास्य संधार्य्य कर्मसु निजेषु च जीवराशिम् ।
अस्तं प्रयन्नपि महो निदधत्स्वमग्निचन्द्रौषधीषु कृपया तमसो विघाती ॥
आनन्दयन्कुमुदिनीं पतिसङ्गलुब्धां आत्मप्रियां तु नलिनीं व्यथयन्वियुक्त्या ।
विश्लेषयन्नपि च कोकयुगं चकोरयुग्मं मिथस्सुघटयन् सुखदुःखदर्शी ॥
वैज्ञानिकं मह इवात्मनि शैशवादिवृद्धं क्रमेण वयसो दृढमन्तरूढम् ।
आत्मोदयादि निजधाम तथा जगत्याः सन्दर्शयन्स्वहृदयेतु वहन्गतोस्तऽम्॥
तत्सप्तविंशतिदिनानि बभूव युद्धं दैवासुरं स्वरिव माधुरमागधानाम् ।
अस्त्रैश्च शस्त्रनिवहैश्चतुरङ्गसैन्यरक्तप्रवाहकलितं जनभीषणं च ॥५९॥
अस्तङ्गते दिनकरे मगधाधिनाथ उत्साहदूरहृदयो नृपतीनशेषान् ।
आत्मीयराष्ट्रगमनाय शशास सर्वान् स्वानीकयुक्स्वविषयाय तदाऽपयातः॥
ते यादवानरुरुधुस्त्वनुधाव्य पश्चात् युध्यन्त आत्मधृतये जयिनोऽपयान्तम् ।
बार्हद्रथं बहुबलं बलकृष्णगुप्ताः आर्या बलाबलविदो न कदापि दृप्ताः ॥
अथ युधि विमना विसृज्य वीर्यं मगधपतिस्स निजां पुरीं प्रपेदे ।
स्वबलततियुतास्तथान्यभूपाः निजनगरीः प्रययुर्विषण्णवक्त्राः ॥६२॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजः
यश्श्रीपुल्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये श्रीमति वीरकृष्णविजये सर्गश्चतुर्थो गतः ॥६३॥

इति श्रीवीरकृष्णविजयमहाकाव्ये जरासन्धापयान-
वर्णनंनाम चतुर्थस्सर्गः ।
श्रीकृष्णार्पितो विजयताम् ।

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## पञ्चमस्सर्गः ।

---

स रामश्श्रीकृष्णस्सकलमधुरायां तु मधुरा-
नगर्यां तुष्टात्मा पुरवनविहारादिललितैः ।
न्युवासाऽलं कालं कमपि सुनयन्यौवनरमा-
परीरम्भाह्लादी पुरजननिकायं च मदयन् ॥१॥

जरासन्धः पश्चाद्दुहितृयुगसञ्चोदनबलात्
जिघांसुश्श्रीकृष्णं हलिनमपि योद्धुं सह बलैः ।
उपेतः पर्यायैः पुनरपि पुनष्षोडशमितैः
अपेतोऽसिद्धार्थो वहुलबलकृष्णात्मबलतः ॥२॥

जितं तं प्रत्याजि प्रशमितमदं चापि बहुधा
न विंशत्यक्षौहिण्युपचितबलं हन्तुमशकन् ।
हली वा कृष्णो वा यदुकुलजवीरा अपि परे
जितं नामन्यन्ताप्यपगमितमात्रं विदधतः ॥३॥

न वीराणां वैरं मरणशमनीयं हृदयतो
निवर्तेतान्यस्मात्परिभवमुखाज्जाठर इव ।
जलादिभ्यो वह्निर्ज्वलति च परं यावदसवः
पुनस्त्वायादष्टादशसमितये मागधपतिः ॥४॥

ह्रियेदानीं यावद्बलमपि समादाय नृपतीन्
अशेषान्नानाख्यापरिमितबलान् साधनबली ।

विगर्जन्कल्पान्तोदितघन इवोद्विग्नहृदयः
दिशस्सैन्योद्घोषैः प्रतिरवकृतोऽतीव विदधत् ॥५॥
रुरोधाशास्सर्वा उदधिरिव संवर्तसमये
मरुद्वेगोन्नीतोन्नतगुरुतरङ्गालिभिरिलाम् ।
अपारैस्स्वैस्सैन्यैस्समरनिरतैर्यादवपुरीं
अशेषां तन्वानैर्निजभुजबलेनेव मधुराम् ॥६॥
जरासन्धं दृष्ट्वा नगरमुपरुध्यास्थितमभि-
प्रगर्जन्तं योद्‌धुं त्वपरिमितसैन्यैः पुनरपि ।
समुद्विग्ना अन्तर्यदुकुलजवीरा निशि सभां
स्वकार्ये निर्णेतुं विविशुरखिला वृद्धनिवहैः ॥७॥
सभायामासीनेष्वखिलयदुवृद्धेषु मधुरा-
पतावुग्रानीके कलयति जगादाजिनयवित् ।
विकद्रुश्श्रीकृष्णं शृणु यदुकुलोत्पत्तिमधुना
यथावत्प्राप्तोऽयं समय इह तच्छ्रावणविधौ ॥८॥
पुरा मे व्यासेनोदितमयि कुलं यादवमिदं
यथोत्पन्नं यावच्छृणु भवदधीनं हि सकलम् ।
मयेदानीं वाच्यं यदिह तदुदीर्येत निखिलं
गृहाणैतत्तात स्फुरति यदि तत्साध्विति हरे ॥९॥
मनोर्वंशे त्विक्ष्वाकभिधनृपतिर्यस्सुविदितः
महिम्ना क्षात्रेण प्रथितयशसा धर्मनयतः ।
प्रसिद्धं येनासीज्जगति कुलमैक्ष्वाकमिति तत्
रवेर्धाम्ना चान्या प्रतिहतचरेणात्र महितम् ॥१०॥

तदुत्पन्नः पुत्रस्सकलसुगुणस्तोमवसतिः
प्रसिद्धो हर्यश्वो जनक इव धाम्नातिमहता ।
मघोर्दैत्येन्द्रस्य प्रियदुहितरं सर्वसुभगां
उपायंस्त प्रेम्णा स तु मधुमतीमेकपतिकाम् ॥११॥

तया रेमे रत्या मदन इव शच्येव मघवा
श्रिया विष्णुर्गौर्या शिव इव यथाकाममसकृत् ।
लसच्छुद्धान्तेषूपवनगतकुञ्जेषु गिरिषु
प्रतीरेषूद्यानेष्वपि विहृतिसौधेषु रसवित् ॥१२॥

तया स त्वत्यन्तं शुचिरसमधुस्यन्दमधुम-
स्यमिरुयप्रेयस्या ललितगतिभिस्तोषितमनाः ।
यथा सा तेनापीत्यसुसमधिकप्रेमभरतः
विधाभिस्सर्वाभिर्घटयति विधिः क्वापि मिथुनम् ॥१३॥

यथा शृङ्गारेण प्रियमधुमतीं तोषयति तां
महावीरो राज्यश्रियमपि तथा वीरमुखतः ।
स हर्यश्वो राजा करुणमुखतो लोकमखिलं
गुणैस्सर्वैस्सर्वान् समरसदिशाऽरञ्जयदलम् ॥१४॥

यथा चार्थे कामं भजत इह धर्मे च स तथाऽ-
प्रमत्तो न स्वप्नेप्यतिविमलचेता अनलसः ।
प्रजा रक्षन्पुत्रानिव सुजनतानन्दजनकः
चरन्निक्ष्वाकुं तं विविधविधिभिश्चानुकृतवान् ॥१५॥

प्रजानां सम्प्रीतिं समधिकतरां तत्र कलयन्
तयोर्दम्पत्योर्वाप्यसहशरतिं सोढुमपटुः ।

स्वराज्ये लुब्धो वा विषमधिषणो गुण्यमनुजं
स्वराज्यात्सोदर्यो निरगमयदेनं प्रथमजः ॥१६॥
गुणानां साधूनामपि विकृतिकृत्त्वं क्वचिदहो !
कलास्सौधाकर्योऽमृतरसजगन्मोदजनकाः ।
विषप्रायाः कोकात्मसु परिणताः खेदजनकाः
तथा हर्यश्वस्याग्रजहृदि गुणा वैकृतकृतः ॥१७॥
स चाऽयोध्यां त्यक्त्वा कतिपयपरीवारसहितः
स्वयाऽसुप्रेयस्या सह च मधुमत्या नृपवरः ।
वनं गत्वोवासाऽव्यथितहृदयः कामसुखभाक्
प्रियायास्सान्निध्यं वनभवनभेदं न जनयेत् ॥१८॥
स कामी कुञ्जादौ शिबिरसदने कामवपुषा
तया सत्या नित्यं विविधगतिभिस्तत्र विहरन् ।
यथेष्टं संरक्षन्मदनविभुसाम्राज्यमनिशं
स्वयं तुष्टः कालं नयति मदयंस्तामपि विभुः ॥१९॥
कदाचित्सा साध्वी प्रियपतिमुवाचोभयहितं
न राज्यप्रत्याशा तव तु सहजाल्लुब्धहृदयात् ।
कियन्तं कालं नौ वनवसतिरेषा समुचिता
पितुर्मे गच्छावस्सदनमुपभुंज्वोऽखिलसुखम् ॥२०॥
द्रियेतातिप्रेम्णा स तु मम पिता त्वां स्वभवने
स मे भ्रातात्यन्तं लवण उपचर्यां वितनुयात् ।
नचाशंक्यो मेऽत्यादर इह भवेन्नेति हृदये
यथाकामं हृद्ये दयित विहरावो मधुवने ॥२१॥

वनं तन्नित्येष्टप्रसवमधुधारं मधुवना-
भिधां धत्ते प्राणेश्वर सततसर्वर्तुसुभगम् ।
नचैन्द्रं कौबेरं न परदिविजानामपि वनं
परेषां वा तादृक्कचन विहरावोऽत्र सुसुखम् ॥२२॥

तव भ्राताऽयोध्याविभुपदमदाक्रान्तहृदयः
स्वराज्ये वासं वा न दिशति कथं नाम विभुताम् ।
कियान्कालो याप्यः परभृतिपरिक्लिष्टहृदयैः
वने वा स्थातव्यं दयित विमृशात्मीयमुचितम् ॥२३॥

यथा राज्ये भोगा विविधविषयास्स्युः प्रिय तथा
पितुर्गेहे मे स्युस्तव न वितथं वच्मि वचनम् ।
पितृभ्रात्रोः प्रेम त्वयि विसदृशं वेद्मि हृदये
पिताऽऽवाभ्यां वृद्धस्स सकृदवलोक्यः किल विभो ॥२४॥

इति श्रुत्वा साध्वीहितवचनजातं स रुरुचे
मधोर्गेहं यातुं समयमनुसृत्य प्रभुवरः ।
सकृद्वृद्धो दृश्यश्श्वशुर इति मत्वा स्वहृदये
स्मरार्तानां कान्तावचनमभिरोचेत सकलम् ॥२५॥

तनूजन्मेक्ष्वाकोरखिलभुवनाक्रान्तयशसः
महावीरो राजा सुगुणगणरत्नौघवसतिः ।
महिम्नां क्षात्राणामुदयवसतिर्धर्मफलभूः
प्रतस्थौ भुक्त्यर्थी श्वशुरसदनं दैवबलतः ॥२६॥

सपत्नीको यातो निजतनुपरीवारसहितो
मधोर्गेहं राजा प्रियमधुमतीचोदनबलात् ।

मधुर्वीक्ष्यायातं नृपतिमवदत्स्वागतमिति
त्वदागत्या तुष्टं हृदयमतिवेलन्त्विति च मे ॥२७॥
अहं वृद्धो राजन्मम तु निखिलं राष्ट्रमपि ते
ददानि त्यक्त्वा तन्मधुवनमिहैकं गुणनिधे ।
गृहाणेदं रक्ष स्वभुजवलतोऽत्रैव निवसन्
विदध्यात्साह्यं ते लवण इह शत्रुक्षयविधौ ॥२८॥
समुद्रानूपालंकृतमतिमनोज्ञं वहुलगो-
समृद्धं चाभीरप्रचुरमनुजर्घं वहुवनम् ।
लसत्केदाराढ्यं तृणजलसमृद्धं फलतरु-
प्रकीर्णं रक्षेमं जनपदमनूपातिबहुलम् ॥२९॥
त्वदावासेनाङ्ग प्रभवति सुराष्ट्रं गिरिपुरा-
भिधं दुर्गं हृद्यं पुरमपि रिपूणां सुरुचिरम् ।
महानानर्ताख्यो विषय इह सर्वर्धिसुभगो
भविष्यत्यानूपो जलनिधिसमीपेऽतिसुखदः ॥३०॥
सुराष्ट्रत्वेनापि व्यवहृतिमियादेष विषयो
वसात्र त्वं राजन्निजनृपतिवृत्तं त्वनुसरन् ।
त्वदीयो वंशस्स्याद्धरणिविदितो यादव इति
प्रतीच्छेमं देशं मम विभवजातं च नृपते ॥३१॥
कुलं ते यायातं कुलमनुमिलेदिन्द्वनुकुल-
प्रथां तत्संसर्गादिह च समुपैष्यत्ययि यदुः ।
स सूनुस्स्याच्छूरो वसुरिति तदीयस्तव कुले
हरेः प्रादुर्भावादपि सुविदितं यादवकुलम् ॥३२॥

मदीयं चैश्वर्यं सकलमपि देशं च निखिलं
विहायैकं राजन्मधुवनमिहत्यं तु भवते ।
वितीर्य स्वं यास्याम्युरुभुजबलेनाव तपसे
समुद्रं गृह्णीष्वेत्यथ स समुपादाद्विभुवरः ॥३३॥

मधुस्सोऽगादृर्ध्वं तपस उरुधीरर्थमखिलं
विसृज्य स्वं कामं सकलमपि सांसारिकमहो ।
विभुत्वानुप्राप्ताखिलविभवभोगी मधुवने
सतां रागारागौ हृदयविवशौ संसृतिगतौ ॥३४॥

ततो हर्यश्वस्सश्वशुरमधुदत्तं नृपपदं
गृहीत्वा तद्राष्ट्रं निजभुजबलेनात्ममतितः ।
अनूपप्रायं सत्तरुनिकरवल्लीवितितिभिः
मनोज्ञैरारामैरुचिरमतनोच्छाल्यवनिभिः ॥३५॥

स्ववासार्थं राजा स तु गिरिवरे स्वःपुरसमं
महासौधैस्सौधाकरसदनचुम्ब्युच्चशिखरैः ।
विशालाभिर्वीथीविततिभिरभीक्ष्णं सुरुचिरैः
महोद्यानव्रातैः पुरवरमकार्षीत्परतरम् ॥३६॥

स्वकीयं सौभाग्यं हृदि कलयतामन्यनगरी-
परिष्कारख्यातिः कविकलनजन्येति धिषणाम् ।
निरूढामुत्पाद्येतरवसतिभोगादिविरतिं
नृणां सर्वेष्वंशेष्वपि कलयते तद्गिरिपुरम् ॥३७॥

द्विषद्दुर्गागम्यं विविधधृढयन्त्रावलिभृतं
त्रिलोकीशिल्पाढ्यं बहुवलययुतं सुविपुलम् ।

समृद्धं सर्वर्तुप्रसवतरुवल्लीततिततैः
महारामैः प्रान्ते त्रिभुवनपुरोद्यानसदृशैः ॥३८॥
उवासायं राजा स तु गिरिपुरे रत्नभवने
महेन्द्रश्शच्येव प्रणयिमधुमत्या सह सुखम् ।
मनोज्ञे वास्तूक्तानुगविविधनिर्माणसुभगे
निजैरङ्गैः पौरन्दरसदनसंस्पर्धिनि समैः ॥३९॥
अनूपं तं देशं रुचिरफलपुष्पद्रुमलता-
वनीभिः केदारैरपि विविधशालिप्रसविभिः ।
पुरैर्हृद्यैर्ग्रामैरपि जनसमृद्धैस्सुरुचिरैः
समृद्धं त्वानर्ताभिधमतनुतात्मीयविधिभिः ॥४०॥
प्रजास्स्वास्संरक्षन्निजतनयवत्प्रेमभरतः
त्रिवर्गं संवर्ध्य स्वनयबलतश्शात्रवगणम् ।
वशीकुर्वन्भीत्या निजभुजबलेनापि महता
महाभोगान्भुञ्जन्नवनिमघवासीत्स नृपतिः ॥४१॥
कियत्येवं काले गतवति सुखं तस्य नृपतेः
सतो हर्यश्वस्य प्रियतनयचिन्ताऽन्तरुदभूत् ।
गृहस्थानां सर्वे विषयगतभोगा भवगताः
स्वपुत्रानन्दाप्तेर्विरह इह सन्तापजनकाः ॥४२॥
धनैः किं रत्नैः किं मणिमयगृहैः किं सुवसनैः
अलङ्कारैः किं वा मणिघटितहैमैर्बहुविधैः ।
चरन्नो यद्गेहे हृदयहरनानाविलसितैः
स्वपुत्रस्तद्गेहं गहनसदृशं स्याद्धि गृहिणः ॥४३॥

दरिद्रो वाढ्यो वा भवतु भृतिजीवी नरपतिः
पशुर्वा पक्षी वा लषति सततं सन्ततिसुखम् ।
विशिष्टेप्सा नृणामुभयसुखदत्वेन गदिता
गतिर्नामुत्र स्यात्सुतविरहितस्येति गदनात् ॥४४॥
समृद्धं मे राज्यं पुरजनपदक्षेत्रकलितं
सुभोग्यार्थैस्सर्वैर्धनमपि समृद्धं धनगृहे ।
प्रभूतं भोग्यं मे सकलमनुभोक्ताऽस्य न विधेः
स्थिरा देहाः केषामपि च न नृणां का परगतिः ॥४५॥
यदात्मा पुत्राख्यां दधदभिनवे वर्ष्मणि पुनः
स्वजायायां जातस्सुखभुगिह नित्यो निगदितः ।
इहामुत्राप्येष द्वितनुरसुतो नश्यति नरः
स्वमूर्त्या दुर्मूर्तिव्रजधृदिह दुःखी च सततम् ॥४६॥
दरिद्राणां चिन्ते निजतनयतत्तद्विलसित-
प्रमोदाभावोत्था परगतिगता चेति जगति ।
विभूत्याढ्यानां तु स्वमखिलमितः प्राक्सुखकरं
भृशं नानाचिन्ता हृदि जनयते दुःखकृदलम् ॥४७॥
अपत्यत्वं सूनौ पितृपतनराहित्यकरणात्
तथा पुत्त्रत्वं पुन्नरकगतिरक्षाप्रणयनात् ।
अपुत्राणां का वा गतिरपि परा नेति जगदुः
महान्तः पुत्रो मे बत ! न सुखयुग्मानुघटकः ॥४८॥
किमाचर्यं कर्मोत्तमतनयभाग्यप्रदमिह
प्रसाद्यः को देवो भवति तपसा वा व्रतमुखैः ।

तपोऽसाध्यं लोके न किमपि भवेद्राज्यमपि वा
न रोचन्ते भोगा अपि विभवजास्संसृतिगताः ॥४९॥

वनं वा गच्छेयं निशिततपसे किन्तु विदधे
कथं पुत्रानन्दानिह समुपयायां स्वविधिभिः ।
न कान्तासङ्गादिप्रभवभवभोगाश्च निखिलाः
समाः पुत्रानन्दैः क्षणिकसुखदा ऐहिकपराः ॥५०॥

इतीवासौ राजा विविधगतिभिस्स्वीयहृदये
परं तप्यन् रात्रिन्दिवमपि सुताप्त्यातुरमनाः ।
अनुष्ठातुं कृत्यं किमपि न विनिर्णेतुमशकत्
कियन्तं कालं दुस्त्यज उचितभोगव्रज इह ॥५१॥

तथा तप्यत्यन्तस्तनयविषये राज्ञि सततं
विधेः पाकाद्गुर्विण्यथ मधुमती दैवकृपया ।
स हर्यश्वश्श्रुत्वाऽभिलषितमुदन्तं हृदि मुदं
परामापेत्यन्यो जगति कियतीं कोनु निगदेत् ॥५२॥

ततो राजाऽपश्यन्नवजलदविद्युन्निभरुचिं
लतां वृष्ट्या पुष्टामिव नवरुचिं कोरकभृतम् ।
प्रतीकाश्चत्तेजस्सरिदुदितलावण्यलहरीं
मिथस्तां साकूतं प्रियमधुमतीं दौहृदयुताम् ॥५३॥

यदैक्ष्वाकं तेजस्सकलजगतीरक्षणविधौ
पटिष्ठं विख्यातं त्रिजगति परं क्षात्रपरमम् ।
तदेतत्सावित्रं त्वदुदरगतं प्रेयसि कुल-
प्रतिष्ठायै रक्ष स्वविधिभिरभीष्टार्थभजनात् ॥५४॥

नचारुह्या उच्चं किमपि च तलं नैव शकटं
न भस्माङ्गारादावुपविश न चोलूखलमुखे ।
नकुर्या व्यायामं त्वरितगमनं कुत्र च जलेऽ-
वगाहं नो शून्यं गृहमपि विशेर्वा तरुतलम् ॥५५॥

न शोकं कुर्वीथास्स्वपिहि न दिवा जागृहि न वा
निशायां नात्युष्णं नच निशितरूक्षादिकमपि ।
समश्नीया भीतिं जहिहि कलहं चाशुभवचो-
न रक्तं मुञ्चेर्वा न नखरमुखैस्त्वं लिख भुवम् ॥५६॥

न हास्यं कुर्वीथा अधिकमतिशीताम्लमबले
न सन्ध्यायां भुंज्या नं गुरुमपि चाहारनिकरम् ।
विमुच्य त्वं केशान्न भव न शयीथा अपि सदा
न चोद्विग्ना स्यावाऽऽसनमिहि न वा कौक्कुटमये ॥५७॥

हरिद्रां सिन्दूरं धर कुसुमदामाऽञ्जनमये
शुभं सूक्ष्मं वासश्श्रुतिकरकबर्यादिषु परम् ।
मणिस्वर्णाबद्धा निजविविधभूषाः प्रियतमे
कचानां संस्कारं कुरु विमलगेहे वस सदा ॥५८॥

प्रियेऽद्यास्ताम्बूलं हितमरुचिनिर्णोदनचणं
सदा धार्यं काश्मीरजमपि सुसौभाग्यफलदम् ।
द्विजान्दानैर्देवानपि सुमहनैस्तर्पय परं
शुभैर्गर्भं रक्षाचरणनिवहैरन्वयकरम् ॥५९॥

सदा शौचाचारान्भज गुरुवरान्मानय मुदा
यदर्थे वाञ्छा स्याद्वद तमुपभुंक्ष्व प्रियतमम् ।

मृदं माभुञ्जीथा अपि सुलषितां तण्डुलगणं
न रूक्षं वा किञ्चिन्मधुरमुपभुंज्या बहुविधम् ॥६०॥
इमे धर्मा गुर्विण्यतिहिततयोक्ता मुनिवरैः
त्वया पाल्यास्सूषे रविकुलमणीदीपतनयम् ।
भजन्ती माङ्गल्याननिशमपि सन्तुष्टहृदया
त्यजन्ती त्याज्यानि प्रियतमपदार्थान्भज सुखम् ॥६१॥
इति व्याहृत्यार्यं प्रियमधुमतीं वीक्ष्य रहसि
प्रकामं तुष्टात्माऽभिनवमहसा भासुरतनुम् ।
जगाम स्वं सौधं सुतललितभोगव्रजमहा-
मणीसौधे भूमीर्मनसि सुसृजन्भूपतिरलम् ॥६२॥
अथान्तर्वर्त्नीं तां स्वमुपगतमालोक्य हृदये
ह्रियेषन्नम्रास्यां स्ववदनमपाङ्गप्रसरणैः ।
प्रपश्यन्तीं प्रेम्णा रसविसृमरैर्भावकलितैः
स्मरन्नन्तर्गेहे भृशमभिननन्दावनिपतिः ॥६३॥
क्रमादृवृद्धं तन्व्या उदरमुरुधाम्ना सह महा-
महिष्या भूभारोद्धरणचणगर्भस्य धरणात् ।
पुरा भुक्तेष्वर्थेष्वरुचिरभिनव्येषु च रुचिः
तथाऽपीष्टावाप्तेरखिलनिजधर्मावनबलात् ॥६४॥
कलाभिः प्राच्याशा प्रतिदिवसमेकैकश इव
स्वगर्भे पुष्णन्ती विधुममलपक्षे मधुमती ।
स्वगर्भं पुष्णन्ती शुभविधविधानैरनुदिनं
क्रमान्निन्ये मासान्नव भुवनसंरक्षणपटुम् ॥६५॥

असूतेयं मासे दशम इह साध्वी सुतनयं
शरद्राकारात्रावमलिनकलापूर्णवपुषम् ।
विधुं दिक्प्राचीव प्रविमलमुहूर्ते शुभदिने
जगद्रक्षादक्षाखिलनृपतिसल्लक्षणयुतम् ॥६६॥

अथाऽपश्यत्पुत्रं प्रसवसदनोद्भासिवपुषं
त्रिलोकीमुद्धर्तुं भुवि समवतीर्णं हरिमिव ।
सरोजांघ्रिं जन्वाततभुजयुगं छत्रशिरसं
विशालाक्षं राकाविधुवदनमेषा मधुमती ॥६७॥

स हर्यश्वश्श्रुत्वा तनयमुदितं सम्भ्रमयुतः
समागत्यैक्षिष्टोदितमुदयशैले रविमिव ।
प्रभापूर्णं सर्वावयवसुभगं सत्पदयुतं
स्ववंशोद्धाराय स्वयमुदितमत्रेत्यमनुत ॥६८॥

तदानीमानन्दं नृपतिमिथुनं वीक्ष्य तनयं
त्रिलोकीसाम्राज्यावनपटुमहालक्षणयुतम् ।
कियन्तं प्रापेति स्वयमिह कविः कोनु निगदेत्
परो ब्रह्मानन्दं मुनिहृदयगं किंनु निगदेत् ॥६९॥

ततस्स्नात्वा जाताभ्युदयिकृतिजातं विरचयन्
सहस्रं गाः प्रादात्कनकरजतालंकृतियुताः ।
द्विजेभ्यो हर्यश्वो मणिकनकमुक्तादिनिकरं
पुरे पौरेभ्योऽपि प्रतिगृहमदादर्थविततिम् ॥७०॥

स्त्रियो बाला वृद्धा अपि च युवकास्सर्वमनुजाः
गजा अश्वा गावस्सकलपशवः पक्षिनिवहाः ।
अचेष्टन्तानन्दैस्तदहनि परैस्स्वस्वसहजैः
अशेषं चानन्दात्मकमहह जातं गिरिपुरम् ॥७१॥

कलाभिः पुष्टात्मा विधुरिव सितेत्वन्वयमहं
सुपुष्टाङ्गस्तेजोव्रजन इह बालस्सुववृधे ।
पिता षष्ठे षष्ठीमहनविधिमुख्यैरनुदिनं
शिशो रक्षां चक्रे वसुवितरणाद्यैश्च बहुधा ॥७२॥

त्रयोदश्यां तिथ्यामुषसि शुभकाले नरपतिः
पितॄन्देवान्कुल्यानपि विधिवदभ्यर्च्य मुदितः ।
सुतं संस्कृत्यासौ निगमगदितैर्मन्त्रनिवहैः
जगत्कृत्यं नेतुं विदितयदुवर्माभिदमदात् ॥७३॥

द्विजेभ्योऽदाद्दलप्रकरमपि गा लक्षगयुताः
सुवर्णस्तोमं चाभरणनिवहं वित्तनिकरम् ।
सुतक्षेमाकांक्षी पुरजनसुमृष्टान्नवसना-
द्यनेकार्थत्यागैरपि स समताप्सीन्नरपतिः ॥२४॥

विविधशिशुविलासैः क्षात्रतेजोऽनुकूलैः
अहरहरपि गेहे नन्दयन्तं तनूजम् ।
क्रमसमुपचिताङ्गोल्लासिसाम्राज्यरेखं
प्रतिकलमनुपश्यद्राजयुग्मं ननन्द ॥७५॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजः
यश्श्रीपुत्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये श्रीमति वीरकृष्णविजये सर्गो गतः पञ्चमः ॥७६॥

इति श्रीवीरकृष्णविजयमहाकाव्ये यदूत्पत्तिवर्णनं
नाम पञ्चमस्सर्गः ।

श्रीकृष्णार्पितो जयतु तराम् ।

---

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## षष्ठस्सर्गः ।

---

अथ क्रमेणास्य यदोर्विलासैर्वयोऽनुरूपैर्जनताद्भुतैश्च ।
बाल्यं गतं क्षात्रमहोऽनुरूपं मृगेन्द्रहस्त्यश्वविनोदमुख्यैः ॥१॥
पिता यथावद्विदधेऽनुवेलं संस्कारकृत्यानि विधीरितानि ।
अन्तर्बहिश्शोधनसाधनानि मलापनोदीनि महोऽर्जकानि ॥२॥
मौञ्जीनिबन्धात्तु पुराऽस्य वक्त्रं विशेश भाषामयवाग्वधूटी ।
ब्राह्मी चतुष्षष्टिकलामयी सा विज्ञानधाम्नाऽस्य यदोस्सहैव ॥३॥
सा वैष्णवी शक्तिरथाविवेश साम्राज्यलक्ष्म्या सकलाङ्गसाध्व्या ।
यदुं महिष्या नवयौवनश्रीसख्याः करग्राहिणमिन्द्रतुल्यम् ॥४॥
विकासनेन प्रसवव्रजस्य गन्धस्तरोः कर्षति भृङ्गमालाम् ।
यदोर्गुणश्रीर्नवयौवनेन सर्वाशगा सा जनतां चकर्ष ॥५॥
मध्यं तनूरः पृथुलं स्वमस्य सिंहा नृसिंहस्य यदोरुपेताः ।
व्यायामशक्तिं सुपरीक्ष्य तुष्टा आत्माधिकां वाहनतामवापुः ॥६॥
ऊरू यदोर्वीक्ष्य करभ्रमेण परेभगेर्ष्याकुलितो मदेभः ।
समीपगः केसरिचिह्नदर्शी भीत्या च नम्रस्तमुवाह मूर्ध्ना ॥७॥
आजानुलम्बं भुजयुग्ममस्य साम्राज्यलक्ष्मीपरिरम्भशंसि ।
शृङ्गारवीरौ करुणाद्भुतौ च व्यनक्ति भिन्नात्मसु मानवेषु ॥८॥
अनङ्गपूर्णेन्दुनिभं कनीनां निदाघमध्यार्कनिभं कतीनाम् ।
मुखं यदोर्भाति विचित्ररूपं स्वस्वान्तरात्मानुगतिप्रभेदात् ॥९॥

गुणैरलुब्धा इति सर्वसम्पदो वचो विधातुं वितथं जगत्याम् ।
शिश्लेष गुण्यं नवयौवनश्रीर्भाषारमाभ्यां धरया च कीर्त्या ॥१०॥
न शत्रुभावो हृदयेऽभ्युदीतः कस्यापि लोकोत्तरसर्वशक्तौ ।
मित्रांशगे क्षात्रमहःप्रचण्डे भक्त्या च भीत्या च यदौ गुणाढ्ये ॥
सामन्ततामेव ययुर्नृपालास्सर्वे स्वयं स्वीयमहोपदादिभिः ।
प्रणम्य शीर्षैर्मकुटस्थरत्नैर्नीराजयन्तः पदयुग्ममस्य ॥१२॥
विख्यातरघ्वादिपुरातनेभ्यो भूपालकेभ्यो विशिनष्टि सोऽयम् ।
विना रणान्भानुरिवात्मधाम्ना लोकं विभून्यस्त्ववशीचकार ॥१३॥
स यौवराज्ये नवयौवनश्रीगाढोपगूढो जनतानुकर्षी ।
अशेषराज्याङ्गविधानदर्शी पितुर्भरं तत्र लघूचकार ॥१४॥
शचीव गौरीव रमेव भर्तुश्शीलेन रूपेण गुणैश्च सद्भिः ।
तस्यानुरूपा महिषी बभूव धर्मार्थकामेषु समांशभोक्त्री ॥१५॥
वाणीरमाकीर्तिधरा महिष्यः पञ्चापि वाल्लभ्यमुपेत्य मैत्र्या ।
स्वैस्स्वैर्विलासैः परितर्पयन्त्यस्समं यदोश्चित्तमलं चक्रुः ॥१६॥
पञ्चाङ्गनावल्लभतां समीक्ष्य भूपालचूडामणिकन्यकास्ताः ।
बह्व्योऽवृणं तद्गुणलुब्धचित्ता जग्राह भोग्या बहुवल्लभोऽयम् ॥१७
यदुर्विरेजे द्विजराजवत्स ताराभिराभिर्भुवि वल्लभाभिः ।
शृङ्गारदेवीभिरिवाङ्गलक्ष्मीसम्मोहिनीभिर्हृदयङ्गमाभिः ॥१८॥
कदाचिदुद्यानवनेषु कामं विहारसौधेषु कदाचिदेषः ।
गिरीन्द्रशृङ्गेषु सरित्तटेषु रेमे प्रियाभिर्मदनोपसेवी ॥१९॥
अनङ्गतां स्वस्य जिहीर्षयेव मनांसि मश्नन्युवतीजनस्य ।
मनोभवश्श्रीयदुरूपधारी शृङ्गारसारं स्ववधूषु धत्ते ॥२०॥

सम्राट्सुभोग्या भुवि ये सुभोगास्सर्वेऽपि यूना यदुना यथावत् ।
भुज्यन्त आहारविहारवेषभाषासु भूम्ना समयेषु सम्यक् ॥२१॥
न चालसत्वं क्व च नापि कार्ये न चञ्चलत्वं विषयोपभोगे ।
न दृसता भूतिगतास्य चित्ते यदोः प्रमादो न कदापि वा स्यात् ॥
धर्मच्युतिर्वा न नयच्युतिर्वा गुणच्युतिर्वा न मतिच्युतिर्वा ।
क्रियाच्युतिर्वाऽवगतिच्युतिर्वा कार्येषु दृश्येत यदोः कदापि ॥२३॥
सेवेत देवांश्च गुरून् द्विजाग्र्यान् कालेषु भक्त्या सततं यदुस्सः ।
स्वधर्मजालं विदधाति कामं सश्रद्धमार्यान्महयत्यभीक्ष्णम् ॥२४॥
कल्यैः कलातत्त्वविचारगोष्ठ्या कुल्यैश्च राज्याङ्गविमर्शगोष्ठ्या ।
तुल्यैस्सुकेलीकलनार्यगोष्ठ्या विभज्य कालं चरति स्म राजा ॥२५॥
उद्यानकेलीषु समं वधूभिर्लतातरुव्रातगताढ्यशोभाम् ।
फलप्रसूनस्तवकश्रियं च संवर्णयंस्ता मदयत्यभीक्ष्णम् ॥२६॥
वृद्धोपसेवी सततं विनम्रो दीने दयालुर्विजितारिवर्गः ।
विद्यारहस्यार्थविवेचनोत्को जितेन्द्रियो राज्यरमामनोहृत् ॥२७॥
आनन्दपाथोधितरङ्गडोलाहंसायितं यौवनभोग्यभोगैः ।
यदुं विनोदैर्विविधैश्च सेव्यैस्साम्राज्यलक्ष्मीश्चकमे पतिं तम् ॥२८॥
अब्दैस्सहस्रैर्दशभिस्स्वभोगी वृद्धोऽस्ति हर्यश्वपतिर्विरक्तः ।
इतीव मत्वा चकमे यदुं सा प्रौढाङ्गना वृद्धपतौ विरक्ताः ॥२९॥
तनावनेहस्यथ सम्प्रयाते वृद्धं तु हर्यश्वविभुं समीक्ष्य ।
स्वराजुहावात्मसुखानि दातुं विमानतो दूतमुखान्महेन्द्रः ॥३०॥
स मानवं वर्ष्म विहाय राजा धृत्वा तु दिव्यं वपुरिन्द्रदत्तम् ।
विमानमारुह्य दिवं प्रयातः फलानि भोक्तुं निजधर्मजानि ॥३१॥

साम्राज्यसिंहासनपट्टभद्रपदाभिषिक्तोऽथ यदुर्विरेजे ।
साम्राज्यलक्ष्मीपरिरम्भणेन ग्रीष्मेण भानुश्शरदेव चन्द्रः ॥३२॥
गुणैर्महद्भिः पितृजित्यभीक्ष्णं प्रजा यदौ यूनि महामहिम्नि ।
भृङ्गा इवालं तुतुषुः प्रफुल्ले रसोत्तरे सत्सहकारपुष्पे ॥३३॥
अनूपमेव प्रविधाय देशं सर्वं सुराष्ट्रं व्यतनोत्फलौघैः ।
अन्वर्थमानर्तमनार्तनाया आरामकेदारधरा समृद्ध्या ॥३४॥
वनीपकः कोऽपि न दृश्यतेऽत्र वनीपभूम्याधिनिपीडितो वा ।
व्याधिर्न कं वा स्पृशतीह भीत्या नचाप्यधर्मो यदुराज्यकाले ॥
व्यस्मारयत्स्वैर्विविधैश्चरित्रैरपूर्वगैः पूर्वविभून्महद्भिः ।
धर्मो वपुष्मानिव सर्वभोगसन्धायकस्स्वान्पितृवच्छशास ॥३६॥
न चेतिबाधा नच चौरभीतिर्न युद्धभीतिर्न च हिंस्रभीतिः ।
न वा नृणां भौतिकदुःखचिन्ता न वान्यचिन्ता यदुराज्यकाले ॥
गुप्ता महेन्द्रेण दिवीव देवा भुवि प्रगुप्ता यदुना मनुष्याः ।
सुभुज्यमानात्मसमस्तकामा सुखं न सौवर्गमतीतमीषुः ॥३८॥
प्रशासतस्तस्य सुखेन लोकान्महीमहेन्द्रस्य यदोः कदाचित् ।
अब्धौ वधूभिर्जलखेलनेच्छा जाता गतोऽब्धि तत एष ताभिः ॥
प्रमोदपूर्णस्स्ववधूभिरेष प्रचक्रमे खेलनमब्धिमध्ये ।
नानाविधाभिर्गतिभिर्यथेष्टं सन्तर्पयंस्ताभिरयं चिखेल ॥४०॥
प्रखेलतस्तस्य यदोः प्रकामं पादौ गृहीत्वा बलवत्फणीन्द्रः ।
स धूम्रवर्णोऽतिजवाद्यदुं तं निनाय पातालगतं स्वगेहम् ॥४१॥
महामणिस्तम्भमुखाभिरामं विलम्बिमुक्तामणिदामरम्यम् ।
विचित्ररत्नाभरणोपकॢप्तं प्रवालपत्राञ्चितवृक्षमालम् ॥४२॥

रत्नौघमिश्रद्रुतहेमबद्धभित्तिप्रभाद्योतितदिक्तटान्तम् ।
सुवर्णपुष्पद्रुलताविकीर्णं रत्नौघमुक्तामणिशङ्खपूर्णम् ॥४३॥
विचित्रनिर्माणविशेषहृद्यं जलप्लुतं हैममिवारविन्दम् ।
रत्नाकरेण स्वसुताविहृत्यै निर्मापितं विश्वसृजेव गूढम् ॥४४॥
यदुर्विशेशादद्भुतशिल्पशोभं सधूम्रवर्णस्य निवेशनं द्राक् ।
विशिष्मिये वीक्ष्य गृहं विचित्रमपूर्वनिर्माणकलाभिरामम् ॥४५॥
सुस्वस्तिकालंकृतमस्तकाञ्चन्नागाङ्गनापूरुषसङ्ककीर्णम् ।
पुरं च दृष्ट्वाद्भुतरत्नगेहपूर्णं मुमोदावनिगाम्यगम्यम् ॥४६॥
तं धूम्रवर्णो जलजासने स्वे महत्युपावेशयदिन्द्रतुल्यम् ।
यदुं समभ्यर्च्य मुदा बभाषे धन्योऽस्म्यहं भो त्वदुपागमेन ॥४७॥
वंशं प्रतिष्ठाप्य महान्तमत्र भवत्प्रसूत्याऽऽप पिता द्युलोकम् ।
त्वन्नामतो यादवतामुपेत्य वंशः प्रसेत्स्यत्वयि लोकधृत्यै ॥४८॥
देवा जनिष्यन्त्युषयः फणीन्द्रा वंशेऽत्र ते मानवरूपभाजः ।
महौजसो मान्यगुणा महान्तो महामहिम्ना विदिता बलिष्ठाः ॥४९॥
हरिश्च शेषोऽपि जनिष्यतो द्वौ कुले त्वदीये जगदेकपूज्यौ ।
येनान्वयो यादव एष लोके विभूषितो यास्यति कीर्तिमाढ्याम् ॥
यो यौवनाश्वः किल ते पितृव्यस्तद्भागिनेयीस्तनया ममैताः ।
दिशामि पञ्चापि गृहाण भार्याः प्रजापतेस्त्वं विवहाध्वनाङ्ग ॥५१॥
तवानुरूपा नृप कामरूपास्त्वामर्हकृत्यैः परितोषयेयुः ।
वरं च ते दद्मि गृहाण वत्स वंशाभिवृद्धिर्भविता गरीयसी ॥५२॥
भौमाश्च भोजाः कुकुराः कुले ते दाशार्हवृष्ण्यन्धकयादवाश्च ।
स्युर्नामभिस्सप्तजगत्प्रसिद्धास्तेजस्विनो वीरवरा बलिष्ठाः ॥५३॥
आभाष्य चैवं स तु धूम्रवर्णः पञ्चापि कन्याः प्रददौ जलेन ।
प्रत्याददौ तास्सुभगास्सुशीलास्सुलक्षणः पञ्च यदुः प्रहृष्टः ॥५४॥

ततो यदुस्ता विधिनोपयेमे समन्त्रकं साग्निसपाणिपीडम् ।
संस्कारकृत्यं सकलं यथावदधाद्यथा स्युः किल धर्मपत्न्यः ॥५५॥
महार्घनानाविधरत्नजालं सुवर्णमुक्तामणिविद्रुमौघम् ।
विचित्रवासांसि विभूषणानि ददावुपग्राह्यतया वराय ॥५६॥
यानीह वस्तूनि सुदुर्लभानि नृणां भवेयुर्गुरुयत्नतोऽपि ।
अदात्स तान्यद्भुतरूपभाञ्जि न प्रेमपात्राय भवत्यदेयम् ॥५७॥
तदर्थजातं परिगृह्य सर्वमादाय ताः पञ्चवधूः प्रमोदात् ।
आशीर्विशेषैश्श्वशुरस्य राजा संवर्धितस्तद्वरमाससाद ॥५८॥
वत्साऽऽसु पञ्चस्वयि पञ्च पुत्रा मातापितृद्वन्द्वमहस्समेताः ।
चरेयुरस्मत्समयानुबद्धा जले नृपाला भुवि कामरूपाः ॥५९॥
तदीयमादाय वरं यदुस्स वधूश्च यातो बहिरब्धिमध्यात् ।
आश्वास्य भार्यास्तटगा इहत्यास्सर्वास्समादाय पुरं विवेश ॥६०॥

अथ फणिपतिपुत्रीः प्राप्य पञ्चेष्टरूपाः
मदनजयपताका मानिनीमानकर्षीं ।
शुचिरसकलितैस्ता मोदयन् श्रीरिवासौ
हृदि समधिजगामानन्दसाम्राज्यलक्ष्मीम् ॥६१॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजः
यश्श्रीपुल्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये श्रीमति वीरकृष्णविजये सर्गस्तु षष्ठो गतः ॥६२॥

इति श्रीविद्वत्कविसार्वभौमीये श्रीवीरकृष्णविजयमहाकाव्ये
यदुविवाहसाम्राज्यलक्ष्मीपरिग्रहादिवर्णनं नाम
षष्ठस्सर्गः ।

श्रीकृष्णार्पितो विजयताम् ।

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## सप्तमस्सर्गः ।

अथाहिराजस्य सुतासु पञ्चसु क्रमात्प्रपेदे कुलदीपकात्मजान् ।
यदुस्स पञ्चार्यवरप्रसादादिवातितेजस्विन इद्धपौरुषान् ॥१॥
स माधवो माधवसाम्यभाजनं महीयसा ते महसा गुणव्रजैः ।
बलेन दर्पेण मतेश्च वैभवात् यदोस्सुतोऽयं प्रथमो महायशाः ॥२॥
हरे द्वितीयो मुचुकुन्दनामकः प्रसिद्धराजर्षिवरो गुणोत्तरः ।
तृतीय उद्यद्दिनकृत्समद्युतिस्सपञ्चवर्णोऽर्थपदाह्वयो बभौ ॥३॥
तुरीयसूनुः किल सारसाह्वयो महौजसा मान्यतमो मनीषिणाम् ।
स्वतेजसाऽऽक्रान्तहरित्सुमण्डलस्सपञ्चमोसौ हरितस्सुतोऽभवत् ॥४॥
क्रमेण ते वृद्धिमिता गिरीन्द्रवत्समानतेजोबलदर्पशौर्यकाः ।
कलास्वभिज्ञास्सकलासु यौवनश्रियाऽनुषक्तास्स्वमहस्समुज्ज्वलाः ॥५॥
अथात्मजास्ते पितुरन्तिकं गता बभाषिरे पञ्च धनञ्जयोपमाः ।
नृपुण्डरीका हरिविक्रमाञ्चिताः कदापि कार्यं किमिहानुशाधि नः ॥
वयं त्वदाज्ञानुविधानशक्तयो बलेन वीर्येण च यौवनेन च ।
नचोचितं क्षत्रिययून आलये स्वभोगमात्राश्रयणं विना महः ॥७॥
इति स्वपुत्रान्वदतो यदुस्ततो जगाद सन्तुष्टहृदिद्धतेजसः ।
भवद्भिरज्ञासवयोभिराहितस्वधामभिस्तुष्टहृदर्हभाषणैः ॥८॥
प्रसिद्धविन्ध्योत्तरतश्च ऋक्षवद्गिरेस्तथा दक्षिणतो मनोहरम् ।
पुरद्वयं पर्वतसंश्रयं यथा तथा विधत्तां मुचुकुन्द ओजसा ॥९॥

सुसह्यशैलोपरि शत्रुदुस्सहं पुरं मनोज्ञं विदधातु दक्षिणे ।
सपञ्चवर्णस्तनयोऽयमात्मवान्विशालमव्याद्विषयं तमोजसा ॥१०॥
तदद्रिपाश्चात्यतटे सुचम्पकद्रुमाभिरामे रमणीयपत्तनम् ।
वसेद्विधायात्मबलेन सारसः प्रजाः प्रजावत्परिपालयन्मुदा ॥११॥
सुतोऽवतान्मे हरितोदकार्णवप्रभासुरं द्वीपमहीन्द्रभूषितम् ।
विशिष्टशोभं मणिमौक्तिकादिभिस्सुवर्णवृक्षैर्हरितो मनोहरम् ॥१२॥
पुरीमिमां ज्येष्ठसुतस्स माधवस्स्वतेजसाऽव्याद्युवराजधामभाक् ।
इयं ममाज्ञा मदभीप्सितानुगाः विधाय तां स्यात विभूतिभोगिनः ॥
यशस्विनस्सुप्रजसस्सुविक्रमास्सुमेधसस्सौरकुलप्रदीपकाः ।
चिरस्त्वरं वंशमिमं तु यादवं विधाय धर्मानवत प्रजा अपि ॥१४॥
न धर्मतस्स्वाच्च्यवध्व प्रमादतो न चेन्द्रियाणां वशगाः कदापि वा ।
न चारिषड्वर्गजिताः कदापि वा स दृप्तचित्ता विविधात्मभूतिभिः ॥
न नीतिमुत्सृज्य चरन्तु जातु वा न चापचर्या गुरुगोद्विजामराः ।
न च त्रिवर्गे विषमं श्रयन्तु वा न मन्त्रगुप्तौ चरत प्रमादतः ॥१६॥
वयो द्वितीयं विविधात्मविक्रिया विकर्षकं तद्रजसो विवर्धनात् ।
कलाविवेकेन निरुध्य मानसं विशुद्धकर्मन्यविकारि चारयेत् ॥१७॥
सदा महत्सङ्ग उपास्यतां मनोजिगीषुणा साधुजनेन भक्तितः ।
सुपूजनीयास्सुरगोगुरुद्विजाः कुलप्रवृद्धास्सुहृदश्च बन्धवः ॥१८॥
न सेवनीया मदिरा मदावहा न धूर्तसङ्घैस्सह खेलनं क्रियात् ।
कदापि न द्यूतमुपास्यतां श्रियोऽपहारकं नापि परस्य भामिनी ॥
स्वदारसङ्गो निजधर्मसेवनं महात्मसेवा खलसङ्गवर्जनम् ।
सुरादिपूजा करणावलीजयः परत्र चेहापि सुखावहा इमे ॥२०॥

प्रजानुरागः प्रथमो महीपतेस्समप्रवृत्तिस्सकलेषु शासने ।
नयानुनीतिर्जनधर्मरक्षणं स्वभूतिवृद्धौ सतताप्रमत्तता ॥२१॥
अभोगलुब्धत्वमनर्थलुब्धता विधेयकृत्यानलसत्वमात्मनः ।
अशेषदेशव्यवहारविज्ञता स्वराज्यलक्ष्मीस्थिरताप्रसादकाः ॥२२॥
दया च दीनेषु बुधेषु मित्रता स्वमन्त्रिमुख्येषु च बन्धुभावना ।
स्वभावना बन्धुषु मित्रसंहतौ स्वराज्यलक्ष्मीपरिपोषिका इमाः ॥२३॥
इमान्मदुक्तान् हृदयेषु सन्ततं विचिन्तयन्तोऽनुसरन्त आत्मभिः ।
चरंतु पुत्रा इतरान्मनीषिभिर्निरुच्यमानानपि चाश्रयन्त्वलम् ॥२४॥
व्रजंतु कार्याणि च साधयन्त्वरं स्वस्वानि वर्धध्वमखण्डभूतिभिः ।
चिरायुषो राज्यरमामनोहरास्सुपुत्रपौत्रैस्सकलर्धिभोगिनः ॥२५॥
इति स्वतातस्य यदोरनुज्ञया यथा निदेशं तनयाः प्रतस्थिरे ।
समुत्सहन्तो बलवीर्यदर्पिता गुहान्तरेभ्यो हरयो यथा वनम् ॥२६॥
कुमारतुल्यो मुचुकुन्दभूपतिः पितुर्निदेशेन सविन्ध्यपर्वते ।
बृहच्छिलाकण्टकवृक्षसंकुले पुरीं विनिर्मातुमयस्यदुत्कटाम् ॥२७॥
स तस्य निम्नोन्नतमध्यमस्थलं खनित्रमुख्यैर्विविधैश्च साधनैः ।
विशोध्य सञ्छेद्य च कण्टकद्रुमान् समं विधाप्यारभताद्भुतांपुरीम् ॥
तटे सुरेवासरितोऽतिविस्तृतां गभीरवार्भिः परिखाभिरञ्चिताम् ।
विशालवीथीबहुचत्वराञ्चितां फलद्रुपुष्पद्रुलतावनाततम् ॥२९॥
विहारसौधैरपि रामणीयकैर्विराजितां विस्तृतभूमिकोज्ज्वलैः ।
विचित्रनानाविधशिल्पशोभितैर्द्युघर्षिशृङ्गैरपि रम्यहर्म्यकैः ॥३०॥
ततां महोद्यानवनीभिरालयैर्महोन्नतैर्व्योमसदां मनोहरैः ।
महासभासद्मभिरात्मकर्षकैर्जलादिनानाविधयन्त्रवेश्मभिः ॥३१॥

अभेद्यदुर्गैर्द्विषतां दुरासदां चतुर्हरिद्द्वारचतुष्पथादिभिः ।
विराजितां भूमिगतामरावतीं ससर्ज माहिष्मतिकां महापुरीम् ॥
ररक्ष राजर्षिरसौ पितेव ताः प्रजा महिष्मद्विषयाधिवासिनः ।
महीमहेन्द्रस्सुखमावसन्निह स्वधर्मरक्षी नयवर्त्मनि स्थितः ॥३३॥
तथाक्षवत्क्ष्माभृदुपर्ययं विभुः पुरीं द्वितीयां पुरिकाभिधानकाम् ।
विनिर्ममे भोगवतीमिवापरामशेषलक्ष्मीवसतिं मनोहराम् ॥३४॥
स पद्मवर्णोऽपि च सह्यदक्षिणे पवित्रवेणौ सरितस्तटे शुभे ।
विनिर्ममे श्रीकरवीरपत्तनं विचित्रशिल्पैर्विविधैर्मनोहरम् ॥३५॥
विशालवीथीविततं विहायसं स्वसौधशृङ्गैः कषदुच्चगोपुरैः ।
विहारसौधैश्च महासभागृहैर्लसन्महोद्यानवनीभिरञ्चितम् ॥३६॥
तनुप्रदेशत्वमवेक्ष्य राष्ट्रकं विधाय तत्रैव समस्तमात्मनः ।
निधाय यावद्बलमङ्गसंयुतं प्रभूतपद्मावतदेशमाशिषत् ॥३७॥
स सारसस्सह्यगिरेस्तु पश्चिमे सुचम्पकाशोकमुखद्रुमावृते ।
समर्तुपुष्पर्तुफलद्रुभासिते फलत्सुशाल्यञ्चितताम्रनृत्तिके ॥३८॥
सरोवरैर्भूरिसरिज्झरैर्युते समृद्धघासे वरकाननाञ्चिते ।
विनिर्ममे क्रौञ्चपुरं महर्धिमद्भिर्भुवनावासिदिशोऽन्वशात्सुखम् ॥३९॥
स पञ्चमश्श्रीहरितोऽपि भूपतिस्सुपन्नगद्वीपमशात्समुद्रगम् ।
महार्घनानाविधरत्नराशिभिस्सुरूपयोषित्प्रवराभिरञ्चितम् ॥४०॥
सुवर्णमुक्तामणिविद्रुमव्रजैर्दरादिभिर्द्योतितमर्थसञ्चयैः ।
विराजितं रत्नसुवर्णवेश्मभिर्हरे मणिद्वीपमिति प्रथां गतम् ॥४१॥
दिशन्ति दाशा इह मद्गुराभिधा निमज्ज्य सिन्धौ दरविद्रुमव्रजम् ।
सुवर्णराशिं मणिमौक्तिकव्रजं जलोदितं स्वं विभवेऽखिलं च ॥४२॥

परे तु संयानमुखैर्निनीयते विशिष्टवस्तूनि विदेशविक्रयात् ।
सुवर्णराशिं समुपागतं परं दिशन्ति तस्मै धनदं चिकीर्षवः ॥४३॥
स माधवो ज्येष्ठसुतोऽभिषेचितस्स्वयौवराज्ये जनकेन सादरम् ।
वसन्गिरिप्रस्थपुरेऽनुरञ्जयन् प्रजाश्च मातापितरौ स्वतेजसा ॥४४॥
यदुस्स कालं कमपीह धर्मतो विधाय राज्यं जनताऽनुरञ्जकः ।
विमानमारुह्य महेन्द्रचोदितं ययौ सुपर्वामनुमण्डयन्दिवम् ॥४५॥
तदात्मजाः पञ्च महानुभावका यथा स्वदेशं पितृशासनानुगाः ।
अपीपलन्नुत्कटधाममिर्निजैः प्रजाः प्रजावत्स्वनुरञ्जनोद्यताः ॥४६॥
समे च ते राजऋषीन्द्रतेजसस्सुवर्चसस्सुप्रजसस्सुमेधसः ।
स्वधर्मनिष्ठास्स्वकुलप्रदीपका इहान्वयं यादवमभ्यवर्धयन् ॥४७॥
तदग्रजस्योदितवांस्तु सत्त्वतस्सुतोऽतिसत्त्वार्थवदात्मनामकः ।
सनाथकस्यात्मगुणात्तसद्यशा यतोऽगमन् सात्त्वतनामयादवाः ॥४८॥
तदात्मजो भीम इतीह भीषणो द्विषद्गणस्याप्रतिमप्रतापतः ।
यतस्तु भैमा गदिता हि यादवा महौजसो धार्मिकपुण्डरीकतः ॥
प्रशासति स्वं विषयं स्वधर्मतस्स्वतेजसा भीममहीपतौ सति ।
पुरन्त्वयोध्यां जनकात्मजापतिः प्रशास्ति रामो रमणीयतेजसा ॥
अतीव दृप्तो लवणासुरस्तदा विगर्हमाणो रघुवीरपौरुषम् ।
दिदेश वार्तां समराय दूततो लिलेख लेखामपि राघवाय सः ॥
तदीयवार्तां विनिशम्य राघवो विहस्य शत्रुघ्नमुपाहिनोत्तदा ।
जघान युद्धे लवणासुरं जवाद्वशीचकारास्य मधोर्वनं महत् ॥५२॥
मधुस्स्वराज्योपमितं च कारयन्निजात्मजतुल्यं च सुताय दत्तवान् ।
समर्तुपुष्पद्रुफलद्रुशोभितं समं विभूत्यास्य वशं वनं व्यधात् ॥५३॥

स शत्रुहन्ता स्वजयैकसूचकं पुरं विनिर्मातुमिहैच्छदुन्नतम् ।
मधुं यतोऽरान्मधुरत्वतोऽर्थतस्तदाच्छिदाधान्मधुरां महापुरीम्॥५४॥
प्रसूरिवात्मामृतदायिनी सदा सुतामिवाश्लिष्य कलिन्दकन्यका ।
दिवानिशं स्कन्ध इवात्मनस्तटे वहत्यतिस्निह्यति यां महापुरीम् ॥
यदीयसौभाग्यमिलापुरान्तरे न कुत्रचिद्दृष्टमनन्यशिल्पतः ।
गतानि वीक्ष्योर्ध्वमधश्च कानिचित्पुराणि लोके प्रथितानि मन्महे ॥
अशेषलोकेशभवन्महोभुवा विनिर्मिता शत्रुजितात्मसंस्थितौ ।
त्वयाऽधुना प्रेमभरादधिष्ठिता हरे कियत्सौभगगा भवेत्पुरी ॥५७॥
इमां विनिर्माय पुरीं महोज्ज्वलां स शत्रुहाधिष्ठितवान् स्वयं चिरम् ।
रघुप्रवीरेण सहात्मनः पदं यदा जगामात्र तु तावदास्थितः ॥५८॥
ततस्स भीमो यदुवंशभूषणं पुरीं वशीकृत्य ररक्ष राष्ट्रकम् ।
तदादि सेयं यदुकुल्यपालिता बभूव सर्वर्धिमती मनोहरा ॥५९॥
रघुप्रवीरस्य सुते कुशे विभौ लवे युवेशोऽत्र तु भीमनन्दनः ।
शशास राज्यं प्रथितोऽन्धकाभिधो गते तु भीमे दिवमुच्चतेजसा ॥
तदात्मजो रेवतसंज्ञको बभौ स्ववंशकीर्तिं प्रथयन् सुधार्मिकः ।
सुतस्तु तस्याजनि ऋक्षसंज्ञको गिरीन्द्रशृङ्गे महसा महीयसा ॥
स रैवताख्याप्रथितो गुणाकरो यतो गिरी रैवतकाभिधोऽजनि ।
समीपतोऽब्धे रमणीयरूपभृत्प्रथामगाद्रम्यमहीधरेषु यः ॥६२॥
तदात्मजोऽभूदिह विश्वगर्भ इत्यभिख्यया विश्रुत उच्चतेजसा ।
सतु स्वजायासु तिसृष्वजीजनच्चतुस्सुतान्दिक्पतितुल्यतेजसः ॥६३॥
वसुं च बभ्रुं च सुशेषणसंज्ञकं सभाक्षनामानमतुल्यशक्तिकान् ।
यतो जगत्यां विततं तु यादवं कुलं न एतन्महितं महौजसा ॥६४॥

वसोः पिता ते वसुदेव ऊर्जितो जगत्पते देवसमोऽभ्युदीतवान् ।
तथा पृथाख्या भुवि देवतोपमा श्रुतश्रवा चेति बभूवतुस्सुते ॥६६॥
अदात्सुते ते दुहितृत्वरूपतस्स कुन्तिभोजाय वसुस्सुतार्थिने ।
स पाण्डुभूपाय ददौ पृथां सुतां श्रुतश्रवां चेदिनृपाय सुप्रभाम् ॥
त्वमङ्ग कृष्णाभ्युदितो जगत्पते विभूषयन्यादववंशमात्मना ।
समुद्दिधीर्षुर्जगदात्मतेजसा पयःपयोधेरिव चन्द्रमा हरे ॥६८॥
न पौरमात्रं मनुमोऽतिधामकं भवन्तमज्ञेयमहार्थवेदिनम् ।
अमर्त्यगुह्यान्यपि वेत्सि चात्मना भवन्मनीषा विवशास्समे वयम् ॥
त्वमङ्ग योद्धुं क्षम एव मागधं स चाप्रमेयात्मबलोऽतिदुर्जयः ।
अनन्तवीर्योऽखिलराजमौलिगस्त्वसङ्ख्यसैन्योऽतिदुरासदो महान् ॥
पुरी न रोधं विषहिष्यतेऽधुना विलुप्तभक्तेन्धनमुख्यसञ्चया ।
विशीर्णदुर्गा परिखाद्यरक्षिता मुहुर्मुहुर्युद्धहतिप्रबाधिता ॥७१॥
न यन्त्रसम्पत्तिरपीह कापि वा हरे पुरद्वारमुखावनक्षमा ।
न चायुधागारमपीष्टकाचितं कथं सहेतैकदिनेऽपि रोधनम् ॥७२॥
अनेकसम्मर्दविशेषतो बलं प्रभग्नमाकृष्टमरिव्रजेन न. ।
विनंक्ष्यतीत्यङ्ग बिभीम आत्मसु स्वराष्ट्रमेतच्च विमृश्यमात्मना ॥७३॥
जिता नृपा यादवविग्रहेण ये सुराज्यकामैर्विभिदां भजन्ति ते ।
वयं जरासन्धभयद्रुतैर्नृपैस्सुवञ्चनीयास्तु भवेम माधव ॥७४॥
बलेन कंसस्य पुरी न रक्षिता दृढैस्सुदुर्गादिभिरङ्ग पूर्वकैः ।
हठात्तदापातत आत्मरक्षणाक्षमा न रोधं विषहिष्यते द्विषाम् ॥७५॥
वयं हता यादवविग्रहाभिधान्निमित्ततो हा मथुरापुराश्रयाः ।
बतेति शंसेयुरमित्रबाधिता जना निकामं बहुधा भयार्दिताः ॥७६॥

अयं विरोधो मगधाधिपेन नो भवत्समालम्बन आगतः किल ।
त्वमेव नो नायक आज्ञया तव प्रवर्तनं चाशु विमृश्य नो वद ॥
अरिर्बलीयान्कृशसाधना वयं भृशालसास्ते यदुवीरपुङ्गवाः ।
इतः पुरा सप्तदशाजिषु स्थिताः कथञ्चन त्वत्परिपालनोचिताः ॥
विमृश्य सर्वं विषयव्रजं भवान् ब्रवीतु कर्तव्यमिहात्मबुद्धितः ।
नयाध्वना त्वं तु वदेर्यथा तथा वयं च वर्तेमहि सर्वयादवाः ॥
इति सदसि विकद्रुश्शृण्वति स्वाप्तवर्गे
　　मगधपतिनिरोधेऽष्टादशे यादवानाम् ।
हृदि हितमनुरुन्धन्वंशवृत्तेन साकं
　　पुरबलमुखवृत्तं सर्वमाचष्ट तस्मै ॥८०॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजो
यश्श्रीपुल्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये श्रीमति वीरकृष्णविजये सर्गो गतस्सप्तमः ॥८१॥

इति श्रीविद्वत्कविसार्वभौमीये श्रीवीरकृष्णविजयमहाकाव्ये
यदुवंशवृत्तवर्णनं नाम सप्तमस्सर्गः ।
श्रीकृष्णार्पितो जयतु ।

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## अष्टमस्सर्गः ।

ततो बभाषे वसुदेव आढ्यं निशम्य वैकद्रववाक्यजालम् ।
सत्येन धर्मेण नयेन युक्तं कालोचितं कृष्ण विचिन्तनीयम् ॥१॥
षाड्गुण्यवक्ताऽखिलमन्त्रतत्त्ववेत्ता हितार्थं नयधर्मयुक्तम् ।
जगद्धितं सत्यमुवाच राजधर्मानुगं तत्कुरु यद्धितं ते ॥२॥
कृष्णो जगादाथ सदस्यवर्गं भवद्भिरार्या गदितं यथावत् ।
शास्त्रान्वितं हैतुकमाप्तभाष्यं न्याय्यं श्रुतं सक्रममात्मनीनम् ॥३॥
वेदाहमङ्गेह निमित्तमस्मीत्यसौ बलिष्ठो रिपुरित्युपेतः ।
विमृश्य राजान यतो गुणौघं कालानुकूलं प्रयतेत शत्रौ ॥४॥
बलं स्वमन्यस्य समीक्ष्य साधु गच्छेद्बली योद्धुमरीन् स्वयं चेत् ।
शत्रौ बलिष्ठे निजधाम जह्याद्गोप्तुं पुरं पौरगणं श्रियं च ॥५॥
द्विषो जिगीषुर्नयवर्त्मदर्शी पुरादपेतान् समुपेक्षते न ।
अन्वेति पश्चाद्धननाय नीत्या न शत्रुशेषश्शुभदो हि राज्ञाम् ॥६॥
गतेषु मे सप्तदशाजिरङ्गेष्वयं विदित्वैव बलं ह्युपेतः ।
बली जिगीषुः पुनरुद्धतो यन्मामन्वियादेव बलेन हन्तुम् ॥७॥
भ्रातृद्वितीयः पुरतोऽधुनैव क्रमेण गोमन्तगिरिं व्रजेयम् ।
अगस्त्यदिङ्मार्गमनुप्रविश्य पश्यामि तत्रारिबलं बलेन ॥८॥
अशक्तवच्छक्तियुतोऽपि यायां स्वजीवितार्थीव गृहादपेतः ।
आर्यद्वितीयः करवीरसंज्ञं पुरं च तत्क्रौञ्चपुरं च दृष्ट्वा ॥९॥

आवां निशम्यापगतिं पुरीतस्स मागधो द्दसहृदप्रविश्य ।
पुरीमिमां नौ वलतो जिघृक्षुरटंश्च सह्याद्रिवनं प्रयस्येत् ॥१०॥
यात्रेयमावां कुलपौरसर्वभद्रप्रदा स्यादधुनार्यसभ्याः ।
जिगीषुभूपाः परराष्ट्रगारीन्नहि क्षमन्ते क्षयणं विहाय ॥११॥
इतीरयित्वा वलदेवयुक्तः पुरीं विहाय प्रययौ हरिस्ताम् ।
स दक्षिणाध्वानमगस्त्यगुप्तं सद्योऽर्हनीतिर्न विलम्बतेऽर्थे ॥१२॥
तौ कामरूपौ वहुलानि राष्ट्राण्यथ भ्रमन्तौ दिशि दक्षिणस्याम् ।
सह्यादिदेशान्विविधानटन्तौ पुरं त्वयातां करवीरसंज्ञम् ॥१३॥
यद्भूषितं यादववीरवर्यैस्सम्भूष्यते येन च सह्यशैलः ।
यत्सौभगं द्रष्टुममर्त्यसङ्घास्सौधाग्रभूमीषु विशन्ति यानैः ॥१४॥
तस्योपकण्ठे प्रवहत्सुवेणौ सरित्तटोद्भासिमहावटद्रुम् ।
द्विजाश्रितं तससुखोपसेव्यं तौ भ्रातरौ शिश्रियतुर्विशालम् ॥१५॥
तपोधनं तस्य तरोरथस्तान्मूर्तं यथा ब्राह्ममहःप्रदीपम् ।
वामांसविन्यस्तपरश्वथोग्रं गौरं जटावल्कलभासमानम् ॥१६॥
निदाघमार्ताण्डनिभं गभीरं समुद्रवत्क्षत्रकुलान्तकारम् ।
काले हुताग्निं सहवत्सहोमपयस्विनीकर्षिणमीड्यवृत्तम् ॥१७॥
यन्नामवृत्तस्मरणेन सद्यः क्षत्रात्मसु प्राणभयं बभूव ।
तं भार्गवं राममपश्यतां तौ श्रीवासुदेवौ बलरामकृष्णौ ॥१८॥
प्रणम्य तस्मै विनयेन भक्त्या तौ तत्र तद्दत्तकुशासनस्थौ ।
आनन्दपूर्णौ मुनिदर्शनेन कृष्णो बभाषे मधुरात्मगीर्भिः ॥१९॥
जाने मुने भार्गव जामदग्न्य रामं भवन्तं प्रथनैकवीरम् ।
स्वबाणवेगादपसार्य सिन्धुं शूर्पारकं निर्मितवान्पुरं त्वम् ॥२०॥

यदायतं पञ्चशतैर्धनुर्भिस्तुङ्गं शरैस्तत्प्रमितैः प्रसिद्धम् ।
रम्यं महासौधविराजमानमाक्रीडकाराममुखैर्विशालम् ॥२१॥
तथाऽपरान्ताब्धितटे व्यथास्त्वं वेलामतीत्य प्रथितं सुदेशम् ।
सह्याद्रिकुञ्जेषु मुने महान्तमनन्यशक्यं विविधाङ्गहृद्यम् ॥२२॥
यो रावणादीन्मशकानिवाद्धा लोकैकविद्राविण इद्धवीर्यान् ।
वीर्येण विज्ञाय निगृह्य दोर्भिश्चचार लोकेषु निजेन धाम्ना ॥२३॥
स्वतातघाताभ्युदितोग्ररोषात्तत्कार्तवीर्यार्जुनबाहुशाखाः ।
परश्वथेनाच्छिन्न आत्तवेगः क्षात्रं स्वधाम्नाऽधरयन्महस्त्वम् ॥२४॥
हत्वा ततो हैहयराजवर्गं स्वबाहुवीर्यातिशयेन दृप्तम् ।
एकैकवीरश्शितपर्शुधाराकृत्तोरुबाहूदरकण्ठमाभाः ॥२५॥
ब्राह्मं महो घाससमं तु मत्वा दोर्वीर्यदृप्तान्भुवि दुर्नृपालान् ।
समूलघातं विनिहन्तुकामस्त्रिस्सप्तकृत्वस्त्वमिलामचारीः ॥२६॥
परश्वथाघातनिकृत्तकण्ठनिर्यन्नृपोष्णास्रझरैरताप्सीः ।
पितॄन्निजान्रोषपरीतचेता धन्योसि लोकेऽखिलवीरहन्ता ॥२७॥
स्वबाहुवीर्येण वशां धरित्रीं निर्लिप्तचित्तो मुनिकाश्यपाय ।
अदा निजब्रह्ममहस्सु सत्त्वं सुव्यञ्जयंस्तप्यसि जामदग्न्य ॥२८॥
अशेषविद्यापरतत्त्ववेत्ता ब्राह्मस्य धाम्नो निधिरस्यतीतः ।
क्षात्रस्य चेत्यद्भुतमार्यलोके त्वय्येव दृष्टं न परत्र राम ॥२९॥
पृच्छामि कश्चिद्विषयं स्वकीयं सदुत्तरं ब्रूहि मुने विचार्य ।
आवां निवासो मधुरापुरी सा संश्लिष्य यां रक्षति सूर्यपुत्री॥३०॥
आवां कुलं यादवमिद्धवीर्यं पिता सुसत्त्वो वसुदेवनामा ।
जन्मादितः कंसभयाद्व्रजे नौ वासश्च पोषोऽपि च नन्दगेहे ॥३१॥

गाश्चारयन्तौ व्रजवासिनौ नौ धनुर्महच्छद्म विधाय कंसः ।
मत्तेभचाणूरमुखैर्निहन्तुं प्रवेशयामास पुरः पुरीं ताम् ॥३२॥
स्वबाहुवीर्येण समाजमध्ये निहत्य तान्नाम निविष्टवन्तौ ।
कंसोऽसहन्बन्धुयुतावगर्हीद्वाक्छूलपातैस्सुतुदन्मुने नौ ॥३३॥
अहं तदा विष्टरकोपविष्टमाकृष्टवानस्मि कचग्रहेण ।
मृतस्स मध्येपथमेव भीत्या त्यक्तस्समाजे पशुवद्गतासुः ॥३४॥
गाश्चारयन्तावथ कुल्यवृत्त्या जामातृघातोदिततीव्ररोषः ।
रुरोध सैन्यैर्मधुरां जिघांसुरावां जरासन्ध उपात्तवेगः ॥३५॥
वीक्ष्यापि युद्धेषु स लब्धलक्षावावां मुनेऽष्टादशशोऽधुनाप्तः ।
पुरप्रपीडा न भवेत्कृते नावित्यागतौ त्वत्सविधं पुरीतः ॥३६॥
अशक्यरक्षां जनतां पुरीं च समर्ज्य दुर्गाधिकसाधनां च ।
अनायुधावप्यरथावपत्ती मुनेऽतनुत्रावकृतार्थजातौ ॥३७॥
आवां विचिन्त्याप्तभयौ विहाय पुरीं जरासन्धत आत्तवेगौ ।
क्रमादिहाप्तौ सुविचार्य कार्यं ब्रूहि प्रसीदार्य भृगुप्रदीप ॥३८॥
कृष्णस्य वाक्यानि निशम्य रामः प्रत्याह वत्सौ शृणुतं गिरो मे ।
अहं हि तत्पश्चिमसिन्धुतीराद्विहाय शिष्यांस्त्वरितोऽभ्युपागाम् ॥
वक्तुं युवां कार्यमिहाऽङ्ग वत्सावुपागतोऽहं व्रजवासमुख्यम् ।
जानामि तत्तद्दनुजादिकंसघातं जरासन्धसमागतिं च ॥४०॥
सभ्रातृकस्त्वं समुपैष्यसीहेत्यवेत्य कृष्णाऽऽगतवान् सुरार्थे ।
बालत्वभाक्त्वं भुवनस्य गोप्ता हरेऽवतीर्णस्त्विति चाप्यवैमि ॥४१॥
अनन्तमूर्तिं हलिनं बलाढ्यं साह्याय ते भूमितलेऽवतीर्णम् ।
जानामि वत्सामरकार्यसिद्धिर्ध्रुवं भवद्भ्यां भवितेति कृष्ण ॥४२॥

सर्वज्ञमूर्तेस्तव बोध्यबोद्धुर्बोध्यं परैः किञ्चन नास्ति लोके ।
कुत्राप्यथापि त्वयि भक्तिभावाद्वदामि शृण्वङ्ग विधेयमत्र ॥४३॥
त्वत्पूर्वजैर्निर्मितमङ्गराष्ट्रं पुरं च हृद्यं करवीरसंज्ञम् ।
सुपालितं चाप्यधुना शृगालस्स वासुदेवापरनामकोऽस्ति ॥४४॥
दुर्मत्सरी दारुणहृत्प्रचण्डो विभूतिमत्तो दुरहंकृतात्मा ।
पुत्रेषु चासावतिदारुणोऽङ्ग बहूनहन् त्वत्कुलजान्कुलघ्नः ॥४५॥
पुरं त्विदं दुष्प्रभुदूषितत्वाद्दुष्टं विषेणेव पयोऽत्र हेयम् ।
स्थेयं युवाभ्यामिह न क्षणं वा जय्यं पदं शृण्वयि मागधस्य ॥४६॥
तीर्त्वा भुजाभ्यां सरितं तु वेणामवाप्य चैतद्विषयान्तमङ्ग ।
सह्योपशैलं किल यज्ञशैलं व्रजाम तं दुर्गमकाननाढ्यम् ॥४७॥
वसन्ति मांसाशनघोरकर्मचौरव्रजास्तत्र निशां नयामः ।
सह्याद्वहन्तीमिह वारिपातैः खट्वाङ्गिकां तात विलोकयामः ॥४८॥
ततः परेद्युर्गिरिजालशोभां मध्येपथं कृष्ण निरीक्षमाणाः ।
तपोधनांश्चापि विशिष्टधाम्नो व्रजाम तत्क्रौञ्चपुरं सुरम्यम् ॥४९॥
त्वद्वंशजो धार्मिकवीरवर्यो महाकपिर्नाम विभुस्स वन्यान् ।
जनानवत्यात्मजवत्स्वकृत्यैरवीक्षमाणास्तमहर्नयामः ॥५०॥
तत्रैव निश्यानडुहे वसामस्तीर्थेऽतिपूते विमलोदकाढ्ये ।
प्रस्थाय तस्मादुषसि प्रसन्ने व्रजाम गोमन्तगिरिं महान्तम् ॥५१॥
स तुङ्गशृङ्गैर्बहुभिस्सुरम्यस्सर्वर्तुपुष्पद्रुफलद्रुहृद्यः ।
छायातरुच्छन्नशरीरशोभस्स्रवज्झरो भाति महावनाढ्यः ॥५२॥
अकृष्टपच्यैर्बहुशालिवर्गैस्समञ्चितोऽयं मृदुशाद्वलाढ्यः ।
मृगैश्शकुन्तैर्विविधैश्च वन्यैस्सुखं श्रितो व्याधगणैश्च कृष्ण ॥५३॥

शृङ्गं महोत्तुङ्गमनन्यगम्यमेकं पतङ्गैरपि नाधिगम्यम् ।
सोपानभूतं दिवमारुरुक्षोर्विमानविश्रान्तिपदं सुराणाम् ॥५४॥
गाढं महद्भिर्गहनैरथस्तादत्युच्छ्रितैर्वृक्षघनैः प्रकामम् ।
असूर्यरश्मिप्रसरावकाशैस्तस्यास्त्यनन्ताद्रिनिभं दुरापम् ॥५५॥
तस्मिन्महाशृङ्गवरे निविष्टौ संवीक्षमाणौ जलधिं रवीन्दू ।
युवामुदीत्यस्तगतिद्वयेऽपि सुखं चरन्तौ वसथोऽप्रमत्तौ ॥५६॥
तत्रोच्चशृङ्गे घनशैलदुर्गे स्थित्वा जरासन्धमभिप्रयुध्य ।
सुजेप्यथस्तात महाबलिष्ठं दुर्गाश्रितानां न किमप्यसाध्यम् ॥५७॥
गोमद्गिरिस्थौ स युवां विलोक्य बलावलिप्तो मगधाधिपोऽयम् ।
यतेत योद्धुं गिरियुद्धसक्तो ह्यसत्समीक्षेत न कार्यसिद्धिम् ॥५८॥
प्रवृत्तयोर्वां समितौ स्वशस्त्रसन्धानमप्यङ्ग भविष्यतीह ।
कौमोदकीं धेहि सुदर्शनं च सौनन्दसंज्ञं मुसलं हलं सः ॥५९॥
राज्ञां रणो भीषण एष तत्र सुरैः प्रदिष्टः खलु यादवानाम् ।
कालाभकायोपहितौ नृपाणां रक्तं युवां पास्यथ एव भूरि ॥६०॥
चक्रेण च त्वं मुसलेन रामो हनिष्यथो राजसहस्रमाजौ ।
यतस्तदाख्याद्वितयेन देवैर्युद्धं सुसंकेतितमेतदङ्ग ॥६१॥
भूभारहारे प्रथमं तु युद्धमिदं भवेत्तात तवातिघोरम् ।
यद्वैष्णवश्रीमहितात्मधामशस्त्रात्मरूपातिरिहाङ्ग ते स्यात् ॥६२॥
रूपं च तद्वैष्णवमत्र भूपा द्विषोपि देवाश्च महोग्रमङ्ग ।
द्रक्ष्यन्ति दोर्मत्तनृपान्तकारि रौद्रं रसं प्रस्रवदन्तकाले ॥६३॥
अशेषभूपक्षयकृद्द्वितीयं युद्धं महाभारतसंज्ञमङ्ग ।
दैवासुराभं भुवनप्रसिद्धं भविष्यति क्षात्रमहो महोच्चम् ॥६४॥

व्रजाम गोमन्तगिरिं महान्तं विजेष्यसे यत्र तु मागधं तम् ।
बलेन दृप्तं सबलाब्धिमाजौ यत्रामरैस्ते विजयः प्रदिष्टः ॥६५॥
सुधासदृक्षं पिबतं पयोऽङ्ग क्षुत्तृट्छ्रमघ्नं पृथुपुष्टिदायि ।
अशेषशत्रुक्षयकृद्बलाढ्यौ भविष्यथस्तात महामहस्कौ ॥६६॥
इतीरयित्वा स तु जामदग्न्यः पयोऽमृतं तत्प्रददावुभाभ्याम् ।
पीत्वातिदर्पात्मबलप्रदीप्तौ प्रतस्थतू रामतृतीयकौ तौ ॥६७॥
त्रयोऽत्यवर्तन्त वनानि शैलान्नदीश्च तत्तच्छ्रिय ईक्षमाणाः ।
त्रेताग्नितुल्या बलदर्पतेजोविराजमानाः क्रमशो ययुस्ते ॥६८॥
गोमन्तमद्रिं पृथुलात्ममूलं नभःपरिव्यापिनिजोच्चकूटम् ।
दरीमुखस्यन्दिजलोरुधारं विचित्रवल्लीतरुकाननाढ्यम् ॥६९॥
गन्धर्वविद्याधरचारणाद्यैर्निषेव्यमाणं मृगबृन्दजुष्टम् ।
स्वकूटवृक्षाग्रनिघृष्टमेघं तपोधनव्राततत्तं महान्तम् ॥७०॥
सर्वर्तुनानाविधपुष्पगुच्छमरन्दमत्तभ्रमरध्वनीढ्यम् ।
समस्ततत्तत्फलतद्रसानुभूतिध्वनत्पक्षिभिराह्वयन्तम् ॥७१॥
दरीनिकुञ्जव्रजपुष्पशय्याविहारितत्तन्मिथुनाभिनन्द्यम् ।
शक्रायुधाघातरुजानभिज्ञं प्रपेदिरे भासुरमूर्तयस्ते ॥७२॥
शृङ्गं तु तस्यारुरुहुर्महोच्चं ते चोत्तरं व्योमविमानधाम ।
सुखेन योगेन यथा मुनीन्द्राः पतत्रिभिश्चानभिगम्यमाशु ॥७३॥
तौ रामकृष्णौ स्वनिवासशालां तत्र व्यधातामथ दारुपर्णैः ।
यथासुखं स्यादुभयोरपीडा शीतेन वातेन तथाऽऽतपेन ॥७४॥
जगाद कृष्णं त्वथ जामदग्न्यश्शूर्पारकं यामि पुरं मुकुन्द ।
अत्र स्थितस्त्वं घनशैलदुर्गे विजेष्यसे मागधमश्रमेण ॥७५॥

आधत्स्व तद्वैष्णवमात्मतेजस्सन्धेहि रूपं निजमात्मनैव ।
स्वशस्त्रलाभोपि भविष्यतीह स्ववाहनं क्षिप्रमिहाह्वय त्वम् ॥७६॥
महाहवस्स्यात्क्षयकृन्नृपाणां क्रूरग्रहाक्रान्तमयेऽद्य ऋक्षम् ।
त्वरस्व युद्धाय जयावहाय क्षमेत योद्‌धुं क इहात्तशस्त्रम् ॥७७॥
त्वामष्टबाहुं विबुधैकगम्यं वस्तुस्थितात्मानमिह द्विबाहुम् ।
करोल्लसच्चक्रगदं समित्यां बिभेति वा नो मघवापि वीक्ष्य ॥७८॥
देवोपदिष्टस्समयोऽधुनाऽऽप्तस्त्वरस्व कृष्ण त्वमरीन्निहन्तुम् ।
प्रीतिस्त्वधर्म्यानुगतिप्रयुक्ता प्रसीदतीदं वपुरव्ययं मे ॥७९॥
यास्यामि कृष्णाङ्ग महाहवेषु कार्येषु कृच्छ्रेष्वपि वात्मसिद्ध्यै ।
यदा स्मरेर्मां सहसा प्रपन्नस्साह्यं विदध्यां तव मद्वशं यत् ॥८०॥
इति सतु कथयित्वा भाविकार्यं च सर्वं
समरविजयशंसिस्वाशिषा वर्धयित्वा ।
प्रमुदितहृदयस्तौ रामकृष्णौ प्रपश्यन्
स्वपदमभिजगामान्तर्हितो जामदग्न्यः ॥८१॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजो
यश्श्रीपुल्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये श्रीमति वीरकृष्णविजये सर्गोऽष्टमोऽयं गतः ॥८२॥

इति श्रीविद्वत्कविसार्वभौमीये श्रीवीरकृष्णविजयमहाकाव्ये
जामदग्न्यसङ्गमगोमन्तगिरिगमनवर्णनं
नामाष्टमस्सर्गः ।
श्रीभगवत्कृष्णार्पितो विजयताम् ।

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## नवमस्सर्गः ।



श्रीगोमन्तमहागिरेर्गतवति श्रीजामदग्न्ये मुनौ
शृङ्गे तत्र यथासुखं विहरतस्तौ रामकृष्णौ मुदा ।
नानापुष्पफलद्रुवल्ल्यभिलसत्कान्तारसौभाग्यकं
पश्यन्तौ गगनस्थिताविव गिरेर्लक्ष्मीमनन्यादृशीम् ॥१॥

रामोऽगादुपकण्ठगं वनमदृष्टात्माऽच्युतेनोर्जितं
दिव्यैः पुष्पफलद्रुमैस्सुरुचिरं स्वर्गे यथा नन्दनम् ।
पश्यंस्तस्य सुरामणीयकमुपाविक्षत्कदम्बद्रुम-
च्छायायां क्वचिदुल्लसत्सुनयनश्श्रीवारुणीवल्लभः ॥२॥

तच्छायोपनिविष्टलाङ्गलिमनस्सम्मोहको मारुतो-
मद्यामोदवहो नसोरुपगतस्संशोषयन्नाननम् ।
तृष्णोद्रेचनतः पराहनि यथाऽपश्यत्सतत्कोटरं
तत्पुष्पच्युतमेघवृष्टिजनिता दृष्टा सुरा तेन सा ॥३॥

पीत्वाऽऽर्तस्सकदम्बकोटरजनेः ख्यातां तु कादम्बरी-
नाम्ना तां मदिरां पुराऽमृतरसप्राशे स्मरन् सागरे ।
श्रीमच्छारदपूर्णचन्द्रवदनो रक्तेक्षणस्सम्मदात्
पश्यन् प्रेमभरेण तं तरुवरं तत्रास्त रामो मुदा ॥४॥

मत्तो घूर्णितलोचनो मदिरयाऽऽनन्दैकतानात्मवान्
यावत्पश्यति चाग्रतस्सुरवरधूस्तिस्तदाऽवैक्षत ।

दिव्यैरात्मभिरञ्चितास्सुरुचिरास्श्रीवारुणीकान्त्यभि-

ख्याता भूषणभूषितास्सुललिता देवो हली स्वागताः ॥५॥

सा देवी वरुणात्मजा मदिरया मत्तं समीक्ष्याग्रतो

गत्वा राममुवाच देव भवतः कान्ताऽस्मि सा वारुणी ।

दैत्यान्दोर्वल्दर्पितान् जय विभो दुष्टात्मनोऽन्तर्हितं

प्राक्त्वां श्रीवडवामुखे सुमृगयन्त्याप्ताऽनुगृह्णीष्व माम् ॥६॥

तत्तत्पुष्पकचक्रकेसरगता लीना कदम्बद्रुमे

वर्षास्वत्र विभो पिता तु वरुणस्त्वत्सन्निधिं प्रैषिषत् ।

देव प्रागमृतानुमन्थनविधौ लीना यथाऽम्भोनिधौ

राम श्रीवडवामुखेऽपि च तथा नाथ स्थिता त्वत्प्रिया ॥७॥

उत्सृष्टापि विभो त्वया प्रियजिहासामीह न त्वामृते

लोकं सेवितुमुत्सहे परमपीच्छामीश भोक्तुं त्वया ।

दिव्यं कर्णविभूषणं धृतवती कौशेयवासोद्वयं

नीलं चादिमपद्ममप्यहमयि त्वां नोत्सृजेयं सदा ॥८॥

देवी कान्तिरथाऽभ्यभाषत विधोस्त्वं मे विभो वल्लभः

कान्ता तेऽस्मि सहस्रशीर्षमदिरादेवी समा वल्लभा ।

प्राप्तां त्वय्यनुरक्तचेतसमतीवार्य प्रसीदाशु मां

आदायारिजयिन्विभो जय रिपून्देव प्रसीदेति सा ॥९॥

श्रीदेवी तत आगता त्वभिमुखं पद्मालया सा स्रजं

विन्यस्योरसि तस्य राममदिरादेव्या च कान्त्या भवान् ।

सम्यग्भूषित इन्दुवत्प्रियतमस्त्वं भासि भूषामणिं

मौलिं सागरतस्सहस्रशिरसामानीतवत्यार्य ते ॥१०॥

हैमं कुण्डलमार्य वज्रकलितं त्वत्कर्णसम्भूषणं
तच्चाप्यादिमपद्ममेतदमलं कर्णावतंसं विभो ।
कौशेयाम्बरयुग्ममेतदपि ते नीलं मयाध्याहृतं
रामानन्तपुराणभूषणगणं धृत्वा प्रसीदार्य माम् ॥११॥
एवं श्रीगदितं निशम्य स हली स्वीकृत्य भूषा निजाः
मोदेनालमकार्ष्ट भूषणवरैरात्मानमाभासुरैः ।
तिस्रस्तास्स समाददे प्रियतमा देवी बभौ भूषितो-
रामोऽतीव शरन्निशाकरसहस्राभां तिरोभावयन् ॥१२॥
पश्चात्कृष्णमुपेत्य काञ्चन कथागेहे यथा संलपन्
तास्ता आस्त स यावदूर्जितमना रामोऽभिरामो मुदा ।
तावच्छ्रीविनतासुतो हरिशिरस्याकाशतोऽच्यावयत्
मौलिं दिव्यमणिप्रभाञ्चिततनुं तां वैष्णवीं प्राक्तनीम् ॥१३॥
विन्यस्तेव करेण कृष्णशिरसि प्रद्योतयन्ती दिश-
स्साऽपतन्नभसस्ततस्स शुशुभे शृङ्गेण मेरोरिव ।
नानारत्नविचित्रदीप्तिकलितेनोद्भासयन्भानुम-
प्यात्मीयं गिरिधारणं स्वशिरसाप्यावेदयन्वा हरिः ॥१४॥
पश्य भ्रातरमर्त्यकार्यमचिरारूढत्वरं दृश्यते
मौलिस्सुप्तवतो ममाहिशयने वैरोचनेनारिणा ।
आहाकारभृता हृतान्तरुदधेरायुध्य तैराहृता
तार्क्ष्येणेयमिहाहिता शिरसि मे पश्येति कृष्णोऽब्रवीत्॥१५॥
दृश्यन्ते रथगध्वजाग्रततयश्श्वेतातपत्राण्यपि
प्रासानां धरणीभृतां समितये पूर्णेन्दुतुल्यान्यये ।

चण्डार्कांशुनिभानि हेतिनिवहज्योतींषि तानि द्रुतं
मय्याप्स्यन्ति लयं बृहद्रथसुतः प्राप्तोऽतिथिस्त्वादिमः॥१६॥
सोऽयं नौ निकषोपमो रणमुखे प्राप्तस्स कालोऽधुना
तिष्ठे वाजिकृते बलं कियदिति द्रक्ष्याव शत्रोः पुरः।
इत्युक्त्वा परिवीक्ष्य मागधबलं सर्वं समुद्रोपमं
मेने मृत्युसमुत्क्षितान्नरपतीन् सर्वान् ससैन्यान् हृदि॥१७॥
नश्येयुस्सकला नृपा दिवमियुर्नूनं धरैतज्जरा-
क्लिष्टा खेदनिवर्तनेन सुखिता स्यादल्पकाले भृशम्।
व्याप्ता द्यौस्समरे मृतैर्नृपतिभिस्स्याद्भूर्विविक्ता खलैः
प्राप्तोऽयं लयकाल इद्धनृपतिस्तोमस्य चामंस्त सः॥१८॥
मन्वाने हृदि चैवमद्रिशिखरे कृष्णे स बार्हद्रथो-
गोन्मतं परितो गिरिं निजबलैरम्भोधिभङ्गोपमैः।
हस्त्यश्वादिमहारवैर्दशदिशः प्रध्वानयन्नुच्चकैः।
घूर्णत्पर्वसमुद्रवत्स्वशिबिरैर्गोमन्तमाक्रान्तवान्॥१९॥
भूपास्तद्गतिमात्मनोऽस्तगतितश्शंसन्निवार्कस्ततो-
भूतानां विलयं च लब्धजनुषां लोके ध्रुवं प्राणिनाम्।
केषां वापि महीयसामुदयमप्यात्मोदयेनान्वहम्।
संसारं च ततो विराममसकृच्चास्तं ययौ स्वौजसा॥२०॥
सन्ध्यामग्निमुपासितुं द्विजगणान् संचोदयन्कामिनौ
स्त्रीपुंसौ त्वरयन्नताय विविधैश्चेतोभुवो विभ्रमैः।
स्वस्वव्यापृतिवर्गतो भवगताद्विश्रामयन्प्राणिनो
निद्रोपेयसुखाप्तये च निखिलान्व्यापारयन्नस्तमैत्॥२१॥

तारागणामपि तद्विभोस्त्वदयने सम्प्रापयन्नन्तरं
स्वाध्यातुं हृदि योगतः परमहस्तन्निर्विकल्पात्मना ।
संसारोपरिरंसुयोगिविततेस्तद्रागिणां तद्गताऽऽ-
नन्दाप्त्यै च निरन्तराह्निकक्रुतिव्रातश्रमं हारयन् ॥२२॥
धेनूर्वत्सपयोऽतिसर्जनविधानात्यातुराश्शाद्वल-
क्षेत्रेभ्ये निजगोष्ठसन्निधिमरं सम्प्रापयन्नुत्सुकाः ।
नीडांश्चापि गरुत्मतश्शिशुसमाश्वासोद्यतानादरात्
पद्मिन्या मुखपङ्कजं मुकुलयन्नात्मप्रवासाद्भृशम् ॥२३॥
शय्यासंस्करणात्मभूषणगृहोपस्कारमुख्यक्रिया-
संरब्धा विदधद्वधूश्च युवतीर्वृद्धाश्च पाकादिषु ।
सम्भ्रान्ताः प्रणयंश्च काश्चन शिशुस्वाद्वन्नसम्भोजन-
स्वापादिव्यवसायिनीः प्रणिदधच्चास्तङ्गतो भानुमान्॥२४॥
शृङ्गारादिरसोपजीवकरसस्निग्धार्हजग्ध्यादिसं-
चोदी स्वीयकरैः प्रताप्य निखिलं सम्पाचयन्देहिनाम् ।
ओजःपुष्टिमुखं निजोदयमुपक्रम्यादधानः फलं
संसृत्या विदधत्स्वधामकविधुद्वारेण भानुर्ययौ ॥२५॥
तेजस्स्वं जगतीहिताय निदधद्वह्नौ विधावोषधी-
ष्वन्यद्भासयितुं जगत्सु विदधन्निद्रासुखं प्राणिनाम् ।
भूलोके मिथुनानुषङ्गजसुखं यूनां समासादयन्
आत्मध्यानसुखं मुमुक्षुनिवहस्यासञ्जयन्नस्तमैत् ॥२६॥
चौरानप्यभिसारिणीर्विटगणान्क्रूरानुलूकानहीन्
रक्षोभूतपिशाचमुख्यविततीर्नक्तंचरांश्चारयन् ।

स्वस्वव्यापृतिषु स्वयं कुमुदिनीमाश्वासयन्निन्दुना
भर्त्रा सङ्गमयन्निशामपि वधूमस्तङ्गतो भानुमान् ॥२७॥
गोमन्तं शिविरेषु सैन्यनिवहैरारुध्य वार्हद्रथो-
रात्रिं तां बलकृष्णसंहतिदृशा निन्ये कथञ्चित्क्षमी ।
प्रत्यूषेऽथ परेद्यवि स्वनियतान्याचर्यकर्माण्यसौ
भूपालान् स्वविधेयमन्त्रणकृते प्रस्थे समाहूतवान् ॥२८॥
आसीनेषु नृपेषु वेत्रिनिवहास्सत्कंचुकोष्णीषिणः
मध्ये राजसभं चरन्त इह मा शब्दोऽस्त्विति प्रोच्चकैः ।
आभाषन्त ततस्सदस्युपरतध्वाने स वार्हद्रथः
प्रोवाचाखिलभूपतीन् धिषणवन्मन्द्रस्वरेणाञ्चितः ॥२९॥
भूपालाः परितो गिरिं निजबलै रुन्धन्तु सर्वे तुरं
युञ्जन्तूपलयन्त्रसंहतिमलं क्षेप्यास्तथा मुद्गराः ।
प्रासान्प्रापयताद्व्यतोमरमुखानुच्चैर्दृढिष्ठान्लघून्
ऊर्ध्वप्रापणयोग्यशस्त्रनिवहानाधत्त शिल्पिव्रजैः ॥३०॥
तीक्ष्णैष्टङ्कखनित्रकैर्गिरिरयं दार्योऽखिलैस्सर्वतः
भाव्यं सन्निहितैर्गिरिप्रधनविद्भूपालकानां बलैः ।
अद्यावध्युपरोधनं तु विविधैर्भूयादुपायैर्गिरेः
यावद्यादवनन्दनौ शिखरतस्सम्पातयामो यथा ॥३१॥
आरोह्योऽद्रिरशेषसैन्यसहितैर्भूपैस्समन्ताद्द्रुतं
छिद्यन्तां तरवस्सुतीक्ष्णकरणैरुत्सहतो दक्षिणैः ।
शृङ्गारोहसमर्हमार्गविततिस्सैन्यस्य संसाध्यतां
भित्त्वा वा गिरिमन्ततस्समतलं कुर्वन्तु युद्धोचितम् ॥३२॥

काश्मीराधिपतिः कलिङ्गनृपतिर्मद्रद्रुमाद्या गिरेः
पार्श्वं पश्चिममुत्तरं रदमुखो बाणश्च रुक्म्यादयः ।
शाल्वोलूकजयद्रथप्रभृतयः प्राच्यं स्युराक्रम्य भोः
तिष्ठामो दरदश्च चेदिनृपतिश्चाहं तथा दक्षिणम् ॥३३॥

इत्थं मागधशासनं नृपतिषु श्रुत्वाऽनुतिष्ठास्वपु
प्रोवाचाथ स चेदिराड्भृगुरिव श्रीमागधं नीतिवित् ।
राजन्दुर्गम एष पर्वत इहार्थो नास्ति युद्धेन ते
कूटोऽत्युन्नतशाखिकण्टकदुरारोहोऽस्य शक्यो न ते ॥३४॥

कार्यं निश्चितसाध्यसाधनविधं प्रक्रम्य सिद्धो भवेत्
कश्चित्कर्म कदापि वानुविदधत्सन्दिग्धसाध्यं पुमान् ।
यः प्रक्रामयति चात्मसाधनसहस्रासाध्यताऽशक्यता-
विद्धं कर्म सुदुर्गमं च स भवेत्सिद्धः कदा वा कथम् ॥

गोमन्तोयमतीतमानुषगतिः कूटोऽतितुङ्गो दुरा-
रोहः पक्षिभिरप्यशेषतरुभिस्तुङ्गात्मशाखागणैः ।
नानाकण्टकिशाखिभिश्च मनुजासाध्यो महान्पर्वतो-
भेत्तुं वा परिघादिभिश्शितशिलश्छेत्तुं महाशाखिमान्॥३६॥

साध्यस्स्यादयमग्निदानविधिनोपायेन नान्येन भोः
राजन् सर्वदिशासु शुष्कतरुभिर्दग्धो यथा स्यात्तथा ।
तेनैतौ गिरिशृङ्गगौ गुरुशिखादग्धौ भवेतां मृतौ
किं युद्धेन निरर्थकेन बहुलायासप्रदेन प्रभो ॥३७॥

बालौ यादवनन्दनाविति विभू नैवापमान्याविमौ
युद्धे तद्बलमप्रमेयमितरैः पूर्वानुभूतेः पुनः ।

तत्तत्कर्मविशेषतोऽमरवरौ मन्येऽवतीर्णौ छलात्
मर्त्यानामतिदुष्करात्सुविहिताज्जय्यौ न जन्येन तौ ॥३८॥

दाहोऽद्रेस्सुकरोऽभ्युपाय इह नस्स्यात्सैन्यघातं विना
दग्धौ शृङ्गगतौ भविष्यत उतायाताविती दैवतः ।
सङ्घीभूय समेऽपि हन्म इह तौ राजन्नवस्कन्दतो
रोधेनोत्प्लवनेन नोपरि गिरिस्साध्यस्सुरैर्वाप्ययम् ॥३९॥

जातं तद्वचसां निशम्य मगधाधीशोऽश्रमं युक्तिमत्
पर्यालोच्य धिया स साधुनयविद्भूपान्वभाषे ततः ।
शैलश्शुष्कतृणौघकाष्ठनिवहैस्सन्दह्यतां सर्वतः
स्यातां दग्धतनू मृतौ रणमृते तौ भ्रातरावश्रमात् ॥४०॥

चेदीशानमतानुरोधिमगधाधीशस्य वाचोऽश्रम-
व्यपाराज्यसुसिद्धयो रुरुचिरे राज्ञां समेषामपि ।
पश्चादिन्धनराशिभिस्तृणचयैर्गुल्मैश्च शुष्कैर्गिरिः
प्राज्वालि प्रथितोत्सुकैस्तु परितस्सर्वैर्महावह्निना ॥४१॥

वायुर्वह्निशिखा अदीपयदुरू राकाशगास्स्युर्यदा
धूमेनावृतमन्तरिक्षमखिलं ग्रासोपरागे रवेः ।
ध्वान्तेनेव महाशिखाभिरभितो दग्धुं गिरिं पावकः
संवर्तें भुवनं यथा प्रववृते प्राणिव्रजक्षोभकृत् ॥४२॥

पाषाणाः परितो विशीर्णशकलाः पेतुर्भ्रमन्तो भृशं
दूरे दाहविशेषतः फटफटात्कारैर्महान्तो गिरेः ।
सिंहव्याघ्रवराहमुख्यनिवहा आक्रन्दनैर्निर्गताः
धावन्तः परितोऽश्रमन्गुरुरुता दग्धाः पुनश्श्वापदाः ॥४३॥

नानाधातुविचित्रदीप्तिकलितज्वालासहस्राकुलाः
सोल्काङ्गारगणान्ववर्षुरभितोऽत्युग्रान्महाशाखिनः ।
तत्तत्प्राणिगतात्ममृत्युभयजाक्रन्दस्वनैस्सर्वतो-
दीर्णात्मेव हि रोरुदीति वहुधा दन्दह्यमानो गिरिः ॥४४॥

नो कुत्रापि भृगुस्रवोदकमभून्न प्राणिवर्गोऽपि वा
प्रस्थाभिन्नदृषद्गणाश्च सकला दह्यन्त इद्धान्तराः ।
स्यात्सर्वोऽपि च भस्मसादिति दशामन्वीक्ष्य रामो गिरेः
क्रुद्धः कृष्णमुवाच सम्भ्रमपरीतात्मा ज्वलन्मूर्तिकः ॥४५॥

पश्यास्मत्कृत एष दुर्णयिनृपैस्सन्दह्यते सर्वतः
स्यात्सर्वोऽपि च भस्मसाद्गिरिरिदं नस्साधु नोत्तिष्ठ भोः ।
अस्मद्वैरनिमित्ततोऽद्रिदहनं कौलीनमङ्गायशः-
प्रापि स्यान्न इदं स्ववाहुवलतो हन्याव दुष्टानिमान् ॥४६॥

धूमौघोद्गिरदग्निसाद्वनमृगव्रातार्तनादा यथा
श्रूयन्ते श्रुतिकर्कशा गुरुशिलाभेदानुपातं शृणु ।
वृक्षाणां परिदह्यमानवपुषां ज्वालाः कराला यथा
वीक्ष्यन्तेऽङ्ग तुरं व्रजाव समुपेक्षार्हो न कालोह्ययम् ॥४७॥

इत्याभाष्य बलो गिरेश्शिखरतस्तूत्प्लुत्य वह्नेर्भयात्
अर्धक्रोशमितस्थले निवसतां मध्ये नृपाणां पतन् ।
सिंहः क्षुद्रमृगानिव स्वभुजतो वेगी जघान स्वयं
भूपानां चतुरङ्गसैन्यनिवहं रोषारुणाक्षो भृशम् ॥४८॥

अश्वैरश्वगणानिभैरिभगणांस्तत्सादिनस्सादिभिः
पत्तीन्पत्तिभिरुद्धृतो रथगणानुद्धृत्य तूच्चैरथैः ।

काांश्चित्पाणितलाभिघातमृदितान्कांश्चित्पदाघाततः
कांश्चिज्जान्वभिघाततस्स तु जघानोग्रो रणे लाङ्गली ॥४९॥
रामे शत्रुभयङ्करे घ्नति रुषा शत्रून् तथाऽनेकधा
श्रीकृष्णोऽग्निशमाय शैलशिखरं पादेन सोऽपीडयत् ।
तेनाद्रेः परितः प्रवाह उदभून्नद्या महान् स क्षणात्
अग्निं तं निरवापयद्धरिरथोत्प्लुत्यावतस्थे युधि ॥५०॥
गर्जन् सिंह इव क्रुधा करिघटव्राते स कृष्णो महा-
सैन्यौघोपरि पाणिपादबहुलाघातैः प्रचण्डैश्चरन् ।
भूपानां बलमाममर्द बहुधा भूपाः प्रवाहान्गिरौ
दृष्ट्वा सैन्यविमर्दिनौ बलहरी चेतस्सु बिभ्युर्भृशम् ॥५१॥
दृष्ट्वा मागधसैन्यसागरममंसातां पुराणायुधा-
न्यन्तस्स्वानि ततस्तु तानि नभसः पेतुः पृथिव्यां क्षणात् ।
दिव्यालंकृतिभूषितानि महसा दीप्राग्निवद्भाखुरा-
ण्यन्तर्भूपसहस्रकं स्थितवतोर्भ्रात्रोः पुरस्तात्तयोः ॥५२॥
वीक्ष्याशेषनृपालमांसघसनायात्यातुराणीव ता-
न्यात्मीयानि सरत्फणीन्द्रसदृशं सांवर्तकं लाङ्गलम् ।
सौनन्दं मुसलं दधार स बलो दीव्यद्ध्वजाभं हरिः
ग्रीष्मार्काभसुदर्शनं शितगदां शार्ङ्गं धनुश्चाददे ॥५३॥
आत्मीयैः पुनरायुधैस्सह निजं तेजोऽपि तद्वैष्णवं
स्वीकृत्यातितरां चकासतुरुभौ तौ रामकृष्णौ रणे ।
संवर्तोदितकालवह्निसदृशौ दन्दह्यमानौ रिपून्
हेतिव्रातमहाधनं जयशितज्वालाभिरुग्रौ रुषा ॥५४॥

रामो ज्ञालतो महारथततीराकृष्य सम्पोथयन्
सौनन्देन जवादचूर्णयदिभव्रातांश्च तत्सादिभिः ।
साकं वाजिगणांश्च मृत्युसदृशस्त्वेकैकघाताच्छता-
तीतान्पत्तिगणांश्च भूपनिवहान् संवर्तरुद्रो यथा ॥५५॥
चक्रेण प्रणिकृत्तबाहुशिरसश्छिन्नोरुजानूदरान्
कुर्वंस्तीक्ष्णगदाभिघातमृदितान्कांश्चिच्च कृष्णोऽवधीत् ।
कांश्चिच्छार्ङ्गधनुर्विकीर्णनिशितेषु व्रातदग्धाङ्गकान्
एकोऽनेक इवेक्ष्यमाण उदितोद्वेगश्चरन्भीषणः ॥५६॥
एको विष्णुरिह द्विधात्मधृदिवैकात्मत्वगौ तावुभौ
युध्यन्तौ पृथगायुधै रणधरामध्ये ज्वलन्तौ भृशम् ।
कालाग्नीइव भूरिसैन्यगहनं दन्दह्यमानौ द्विषां
सर्वेषामपि मृत्युभीतिजनकौ सञ्चेरतुस्सर्वतः ॥५७॥
सैन्यैः कृष्णसुदर्शनारविनिकृत्ताङ्गैर्गदाचुर्णितैः
रामोदग्रहलापकर्षमुसलाघातातिचूर्णीकृतैः ।
मेदोमांसवसातिपङ्करुधिरस्रोतस्विनीं निस्सुताम्
नानाङ्गोत्प्लुतमीननक्रकचशैवालां वहन्तीं जवात् ॥५८॥
सर्पत्क्रोधनसर्पतुल्यहलसङ्कर्षोग्रसौनन्दस-
म्भ्रामोद्धोषिघनाभिघातमृदितैस्स्वैस्स्यन्दनौघैर्गजैः ।
अश्वैः पुञ्जितदेहकैरिव तटैरुद्धां च पत्त्यादिभिः
दृष्ट्वा दुद्रुवुरन्तिकं तु मगधाधीशस्य भीता भृशम् ॥५९॥
दीनान्वीक्ष्य नृपान्विहाय समरं प्रत्यागतानातुरान्
रामोदग्रहलापकर्षमुसलाघातैस्स्वसैन्यक्षयम् ।

श्रीकृष्णोग्ररथांगकर्तनगदाघातावमर्दादिभिः

प्राप्तं च ब्रुवतो जगाद मगधाधीशस्समुद्वेजयन् ॥६०॥

वृत्तिः क्षत्रगणस्य नेयमुचिता प्रत्यागतिस्सङ्गरात्

कातर्येण पराक्रमेण विचरन् भग्ने रथे यो द्रवेत् !

आजेर्भ्रूणहतुल्य एष गदितो विद्वज्जनैः क्षत्रियः

सेयं प्राणपणातिकर्कशतमा स्वस्येतरस्यापि वा ॥६१॥

मानभ्रंशिपदातिगोपयुगलेनायोधनं क्षत्रिय-

व्रातस्येति महाबलस्य महतस्तत्रापि तस्माद्भयात् ।

युद्धात्प्रद्रवणं शिरश्छिदिति किं जानीथ नो क्षत्रियाः

स्वर्गप्राप्तिमृतिर्न किं शुभकरी क्षत्रयस्य हेत्या रिपोः ॥

जातस्याल मृतिर्ध्रुवा निगदिता सर्वस्य च प्राणिनः

सा चेत्स्वर्गसुखप्रदा विहितया रीत्याऽऽगमैर्देहिनाम् ।

क्षत्रस्याहवरङ्गशस्त्रमरणं स्सर्गप्रदं कीर्तिदं

युद्धे प्राणभयात्पलायनमसद्दुर्नारकप्रापकम् ॥६३॥

गोपौ तावभियात भो नृपतयो वर्त्माभिगर्ह्यं जह-

त्वेतौ चण्डगदाभिघातमृदितौ कुर्यामहं तेजसा ।

क्षात्रेणाङ्ग कुसाध्वसं हृदयगं निर्मूल्य वीर्याश्रयाः

नानाशस्त्रधरा बलैस्सह महोत्साहेन सुक्षत्रियाः ॥६४॥

धर्म्यश्रीमगधेश्वरोक्तिजनितोद्वेगा नृपालाः पुनः

संरम्भैर्विविधैर्युधेऽसुविगतस्नेहा धृतात्मायुधाः ।

आरुह्यात्मरथान् स्वसैन्यसहितास्तीक्ष्णेषुजालं भृशं

वर्षन्तोऽभिययुर्युयुत्सुयुगलं तद्रामकृष्णाह्वयम् ॥६५॥

चण्डक्षत्रियबाहुदण्डविचलत्कोदण्डगज्याकृतो-
दण्डध्वानसहागतामितशरासारातिवृष्टिं रणे ।
अब्धौ बाडववह्निवत्स्वमहसा नानानदीनिर्झरान्
अन्तर्धापयतस्स्म तौ शितगदाप्रासादिघाताचलौ ॥६६॥

कृष्णः क्रोधनकृष्णसर्पवदुरुज्वालाज्वलच्चक्रनि-
क्षेपैश्चण्डगदाभिघातनिवहैः क्रुद्धो द्विषां बृन्दशः ।
भूपानां चतुरङ्गसैन्यनिवहं रामो हलेनाददत्
सौनन्देन निहन्ति रोषविवशस्तैक्ष्ण्यं न ते सेहिरे ॥६७॥

रुद्रः किं त्रिपुरान्तको द्वितनुभागस्मत्कृतेऽभ्यागतः
किं वा क्षत्रकुलान्तको मुनिसुतो रामः पुनस्त्वागतः ।
शूलं वा न परश्वथः परमिह श्रीवैष्णवान्यायुधा-
नीक्ष्यन्ते द्वितनुर्हरिर्ध्रुवमिति स्मान्तस्समे मेनिरे ॥६८॥

चञ्चत्कृष्णरथाङ्गनेमिविनिकृत्ताङ्गैर्गदाचूर्णितैः
सैन्यै रामहलापकर्षमुसलाघातातिसम्मर्दितैः ।
आर्तह्रादनिनादितां रणमहीं क्रान्तां समन्तान्नृपाः
वीक्ष्य स्थातुमशक्नुवन्त उदितोद्वेगाः पराग्वक्त्रकाः ॥६९॥

भूपांस्तानभिवीक्ष्य युद्धविमुखान्कृष्णोऽब्रवीद्रे नृपाः
क्षात्रं धर्ममपास्य युद्धविमुखाः किं याथ सुक्षत्रियाः ।
साह्यं नो चतुरङ्गसैन्यनिचयस्यासीत्पदाती उभौ
आवाभ्यां सह योद्धुमङ्ग विमुखा वीराः किमायात न ॥

यद्दोर्दण्डबलेन रक्षितबला योद्धुं समभ्यागताः
क्वासौ दृष्टिपथं न याति मगधाधीशोऽस्ति गूढोऽत्र किम् ।

आवाभ्यां सह योद्धुमैति न कुतो दृप्तो बलेनात्मनः
शक्तिश्चेदभियातु नौ नृपतयः क्षात्रं श्रयन्तामिह ॥७१॥
कृष्णोक्तीर्दरदो निशम्य जनितोद्वेगोऽतिदृप्तात्मवान्
आसन्नात्ममृतिर्हठादभिययौ संग्रामभीमेन सः ।
रामेणेषुगणं किरन् स तु हलेनाकृष्य तं स्कन्धके
सौनन्देन बलादपोथयदयं मूर्धोदरोऽभून्मृतः ॥७२॥
तद्धातोत्थमहारुषा मगधराट्संरब्धचित्तो भृशं
रामं शत्रुकुलान्तकं त्वभिययौ वीरव्रतं धारयन् ।
नो रथ्यस्य पदातिना समुचितं संयोधनं त्वात्मनो-
मन्वानो निशितां गदां समभिगृह्योद्रिक्तसंरम्भवान् ॥७३॥
आदाय स्वगदां हली बलवतीमुद्रिक्तरोषारुण-
स्वाङ्गो मागधमभ्ययात्सदधतं सव्यं युधे मण्डलम् ।
रामो दक्षिणमण्डलं स्वयमुपादायेन्द्रवृत्रौ यथा
तौ द्वौ चण्डगदाजिपण्डितवरौ संयुध्यतस्साम्यतः ॥७४॥
रामस्याशनिनिस्स्वनोपमगदाघातस्वनैर्मागध-
स्याद्र्युद्भिदरवोपमैश्शितगदाघातस्वनैर्नादिताः ।
सर्वाशाः प्रतिदध्वनुर्नृपतयस्सर्वे समैक्षन्त त-
द्युद्धं स्वाजिमपेत्य देवनिवहा स्स्थित्वा मुनीन्द्राश्च खे॥७५॥
उद्दण्डं परिमण्डलभ्रमणगं पाण्डित्यमन्यान्तरा-
लोके चण्डतरान्यनिर्हतिविधौ तौ द्वौ गदायोधने ।
आत्मीयं बहुधा त्वनन्यसदृशं सन्दर्शयन्तौ मिथो
युध्यन्तौ चरतस्समं परहतीर्गुर्वीस्सहन्ताविह ॥७६॥

अश्रान्त्या चरतोः प्रतिप्रहरतोस्साम्येन शूराग्र्ययोः
अन्योन्याभिजिघांसया युधि तयोराकाशगा वागभूत् ।
रामायं भवता न वध्य इतरायत्तास्य मृत्युः कृता
कालेऽल्पेऽपेत्विति तां निशम्य मगधाधीशो विचेता अभूत् ॥
सन्त्यज्याथ गदामतिष्ठदवनौ रामोऽपि न प्राहरत्
तं सन्त्यक्तगदं विषण्णवदनं युद्धस्य धर्मं स्मरन् ।
भूपाला विमुखास्ततो निजबलैश्शिष्टैः पुरीस्स्वा ययुः
स्वस्थानं मगधेश्वरोऽपि स ययौ विध्यत्स्वहार्दव्यथः ॥७८॥
पश्चाच्चेदिपतिस्स्वयं समुपयन् भ्रात्रोस्तयोरन्तिकं
बन्धू सन्निहितौ युवां मम पितृष्वस्रा सभार्योऽस्मि वाम् ।
शौर्यं वा मयि सांयुगीनमपराक्त्यं सुरैर्वाप्यहो
दृष्टं तुष्टहृदा मयात्र पुनरित्याभाषताऽत्यादरात् ॥७९॥
भूयस्त्वत्सहयोधनाद्विरमणं कृष्णोपदिष्टं जरा-
सन्धायाङ्ग मया वचो न रुरुचे तस्मै मदीयं हितम् ।
हित्वा तेन तमागतोऽस्मि कुमतिं बार्हद्रथस्सानुगो-
निर्वैरो न तु याति किं त्वपकृतिं काञ्चिद्विधित्सुर्ध्रुवम् ॥
बीभत्सेन समाश्रितां त्यज धरामेतां हतौघावृतां
क्रव्यादव्रजसंकुलां भृतमहामांसौघरक्तान्विताम् ।
गच्छामः करवीरपत्तनमितस्साकं बलैर्मे हरे
द्रक्ष्यामस्तु शृगालभूपतिमये तं वासुदेवाभिधम् ॥८१॥
जाने त्वां जगतीभरापहृतये द्वेधाऽवतीर्णं हरिं
बाल्याद्युष्मदमानुषाद्व्यकृतिभिस्तत्राङ्ग ते बन्धुता ।

प्राप्ता धन्यतमं व्यधादिह पुनर्मां कृष्ण युष्मत्कृते
भव्यं स्यन्दनयुग्ममाहितमधिष्ठातुं प्रसीदेश माम् ॥८२॥
इत्थं चेदिपतेर्वचांसि स निशम्योवाच कृष्णः पुनः
प्राप्तो बन्धुवरोऽसि नौ समरसन्तप्तात्मनोस्त्वद्वचः ।
आवां दिव्यसुधानुषेकवदलं सन्तर्पयामास भोः
चित्ते स्वो भवताधुना नरपते जातौ सनाथौ भृशम् ॥८३॥
देशं कालमवेक्ष्य वक्ति मधुरां वाचं हितां यस्सुहृत्
बन्धुर्वा स तु दुर्लभो भुवि नृणां बन्धुस्त्वमीदृक्सुहृत् ।
प्राप्तो नावनवाप्यमस्ति न किमप्यायोधने मागधं
राज्ञोऽन्यानपि साद्यतस्तव निहन्वस्स्मादिबन्धुर्भवान् ॥८४॥
अद्यारभ्य महाहवेषु महितस्त्वं रक्ष्यसे शत्रुत-
स्त्वावाभ्यामयि चाक्रमौसलरणं गोमन्तगं नौ गुरुम् ।
राज्ञां भूरिपराजयं च वदतां निध्याय तामात्मसु
स्यात्स्वर्गः करवीरपत्तनमितो यास्याम चेदिप्रभो ॥८५॥
इत्युक्त्वा रथगौ तदोदयमहाशैलाग्रसंस्थौ यथा
सूर्याचन्द्रमसौ जगद्धितकृते तौ रामकृष्णौ मुदा ।
श्रीमच्चेदिकरूषसैन्यसहितौ तद्भूपसन्दर्शिता-
ध्वानौ श्रीकरवीरपत्तनमथागातामहोभिस्त्रिभिः ॥८६॥
तत्पुर्योन्यविशन्बहिर्बलयुतास्सर्वेऽपि तत्सैन्यसं-
घोषे कर्णपथं गते स तु शृगालोऽत्यन्तरुष्टात्मवान् ।
योद्धुं चाभिययौ बलेन महता दर्पात्तसंरम्भतः
प्रोवाचाथ हरिं गिरोऽतिपरुषा रोषं वमन्तीर्भृशम् ॥८७॥

गोमन्ते भवतोर्विचेष्टितमयेऽस्माभिस्समाकर्णितं
निर्वीर्यावनिपालवर्गजयिनौ जानीथ एताविह ।
चण्डास्मद्भुजदण्डमण्डलपरिभ्रान्तारिखण्डीकृति-
ख्यातोद्दण्डशरप्रकाण्डविकिरत्कोदण्डशक्तिं शिवाम् ॥८८॥
कृष्णाहं त्वमपीह यज्जनतया ख्यायावहे भूतले
शूराग्र्यौ यदुवंश्यधन्विषु परं द्वौ वासुदेवाख्यया ।
नाहं तत्तु सहे भवत्विह भवानेकोत्र वाऽसान्यहं
युध्यस्वात्ममहः प्रदर्शय रणे पश्याशु शक्तिं मम ॥८९॥
एवं तस्य गिरो निशम्य भगवान्कृष्णस्तु तं चाब्रवीत्
शूराणामिह शूरता न वचसि स्यात्क्षत्रियाणां सताम् ।
तिष्ठामीह रणाङ्गणे यदि वचांस्यन्वर्थये: पार्थिव
त्वं तुष्येयमथो शृगाल भवतश्शक्तिं परीक्षे कृतौ ॥९०॥
पश्चाद्रूक्षकटाक्षवीक्षणशतैः क्रोधाग्निकीलाः क्षिपन्
तीक्ष्णाः कृष्णमुवाच सैन्यसहितो योद्धुं त्वया नोत्सहे ।
एकेनाहमिहैक एव तु पुनर्युद्धे स्वधर्माश्रितः
त्वं वाहं निधनीह यावदिति संरम्भाद्वदन्जघ्निवान् ॥९१॥
बाणैस्तीव्रतमैर्घनैश्च मुसलैः प्रासैर्गदाद्यैश्शितैः
कृष्णं जिष्णुमवाप्तमृत्युरभितः क्रोधाज्जवानोद्धतः ।
सोढ्वा तन्निशितायुधाहतिततीः कृष्णश्शृगालेऽसुहृत्
चक्रं प्राक्षिपदिद्धधाम तदुरस्तूर्णं ददार द्विधा ॥९२॥
तेनासूनजहाच्छृगाल उरसा रक्तं बृहत्सूद्गिरन्
चक्रं कृष्णकरं व्यभूषयदरं दुष्टासुसद्योहरम् ।

श्रुत्वा तन्मरणं क्षणेन समरे शुद्धान्तकान्तादयः
पौरा बन्धुसुहृज्जना अनुचरा मन्त्र्यादयश्चाययुः ॥९३॥
संग्रामे पतिते शृगालनृपतौ सैन्या भयाद्दुद्रुवुः
केचित्केचन तस्थुरार्तनिनदैः कृष्णस्तु तेभ्योऽभयम् ।
माभैष्टेति ददौ वलं मृतविभुं हन्यां न शूरव्रतं
संरक्षन्नपराधहीनमसतो भूपस्य दोषादहम् ॥९४॥
क्रोशन्तो नितरां सुविस्मितहृदस्सर्वेऽतिशोकाकुलाः
चञ्चच्चक्रविदारितोरसमुदीर्णास्रावसिक्ताङ्गकम् ।
संग्रामावनिशायिनं निजपतिं शूराग्रगण्यं महा-
तेजस्कं पतितं दिवो रविमिवाचेष्टं त्वपश्यन्भुवि ॥९५॥
उच्चैस्तद्गुणवर्णनैर्बहुविधैस्सर्वे विलेपुर्भृशं
वक्षोमूर्धविताडनैः स्तननखाभङ्गादिभिस्तत्प्रियाः ।
अङ्गस्पर्शनचुम्बनादिभिरलं तस्यातिदुःखातुराः
क्रोशन्त्यः कुररीवदार्तनिनदैरानादयंस्ता दिशः ॥९६॥
नाथानाथदशां क्षणादगमयोऽस्माकं गतिः का विभो
नास्माभिस्सह भाषसे दयित नो नो वीक्षसे वा कुतः ।
प्राणेशोत्कटरोषकृत्तव कदा बद्धोऽपराधो महान्
दग्धं नस्सकलं च यौवनसुखं घोरान्महापापतः ॥९७॥
इत्याद्यार्तविलापवाक्यनिवहैश्चेखिद्यमानासु त-
त्पत्नीषु प्रथमा तदीयतनयं तं शक्रदेवाभिदम् ।
बालं सा महिषी पुरस्कृतवती पद्मावती श्रीहरिं
प्रोवाचेश जगच्छरण्य शरणं त्वां यात्ययं बालकः ॥९८॥

एको वंशकरस्सुतोऽर्भक इहामुत्राप्ययं नो गतिः
यं चक्रेण रणाङ्गणे निहतवांस्त्वं तस्य सूनुः प्रियः ।
याचे त्वां शरणं गतं स्वसुतवद्रक्षेति मे बालकं
नत्वाऽभ्येत्य पितास्य बान्धवबहूकारी म्रियेतात्र किम् ॥
जातं त्वां धरणीधुरापहृतये विष्णुं यदोरन्वये
जानीमो जननादिचेष्टितवरैर्दिव्यातिगा मानुषैः ।
अस्मत्कर्णपथंगतैस्सुविदितैर्जानाति नाथोऽपि मे
प्राप्ते काल इहेश मुह्यति सुधीरप्यात्मनो वैकृतात् ॥१००॥
श्रुत्वा तद्वचनान्युवाच स हरिस्तां राजपत्नि! त्वया
यत्तूक्तं तत आत्मनो व्यपगतो रोषो मृतेश्चासतः ।
शान्तात्मा प्रकृतिं गतोऽस्मि भवती बन्धुस्सुतो मत्सुतः
दद्मचस्मायभयाभिषेकयुगलं प्राज्येऽपि राज्ये तव ॥१०१॥
मन्त्र्यादीनभिषेचनाय महिषीहाह्वायययाचार्यमि-
त्युक्ते श्रीहरिणा समाययुररं सर्वेपि ते सम्भ्रमात् ।
श्रीकृष्णोऽभिषिषेच तं नृपपदे बालं यथावन्मुदा
पश्चास्यासनवर्य एनमुपवेश्यार्हैर्विधानैस्स्वदम् ॥१०२॥
आरुह्यात्मरथं रणार्जितमथ प्राष्ठात्तदैवाहनि
भ्राता चेदिनृपेण सैन्यसहितेनात्यन्तमोदान्वितः ।
आश्लिष्टात्मजयश्रिया स तटिताऽऽश्लिष्टो यथा वार्षिको-
मेघस्स्वां मधुरां पुरीमुपययौ पश्चाहतस्तत्पुरात् ॥१०३॥
गोमन्तात्सुजयश्रियाऽभ्युपगतौ श्रीरामकृष्णौ महा-
वीरौ चेदिविभूत्तमेन सहितौ श्रुत्वा तु ते माथुराः ।

सर्वे मोदभरेण माङ्गलिकसम्भारैर्वहिस्थौ पुरात्
अभ्येत्यातितरां सवालजरठस्त्रीकास्तदाऽमीमनन् ॥१०४॥
माधुर्यं मधुरापुरेऽतिसहजं निर्माणसौभाग्यतः
सौधोद्यानवनीविहारसदनप्रासादरथ्यावलेः ।
सम्पद्भिस्सकलैस्सुभोगनिवहैस्त्रीपुंससौन्दर्यतः
सर्वानन्दविभूतिभिः परिखया नद्यार्कपुत्र्या तया ॥१०५॥
सर्वाशैर्मधुरामपीह धरणीभूषामणिं तां पुरीं
भव्यैर्नव्यविभूषणैर्बहुविधैस्सम्भूष्य सत्कौतुकात् ।
तत्तन्मङ्गलतूर्यनिस्स्वनशतैस्तोत्रैर्गुणोत्कीर्तनैः
सर्वाशाः प्रतिनादयन्त उरुभिः प्रावीविशंस्तौ जनाः ॥
रथ्यामध्यगतौ रथोपरि समाविष्टौ द्वयोः पार्श्वयोः
पश्यन्तौ पुरसौभगं प्रतिपदं लाजप्रसूनाक्षतैः ।
सौधेभ्यस्सुविकीर्यमाणशिरसौ नीराज्यमानौ प्रति-
द्वारं न्यस्तसुमस्रगाभृतगलौ पौरैरयातामुभौ ॥१०७॥
रथ्याश्वान् सुनियम्य रश्मिनिवहैर्मन्दं नयन्तो रथान्
यन्तारो बलकृष्णचेदिनृपतीन्रथ्यासु निन्युः क्रमात् ।
तस्मिन्पौरमहामहे बलहरी तातालयं जग्मतुः
निर्भीकाश्चरतेति पौरनिवहं तं त्वादिशन्तौ मुदा ॥१०८॥
उत्सृज्यायुधजालमुत्कटमुदा तौ रामकृष्णौ पितुः
पादद्वन्द्वमथाभिवन्द्य जननीसद्माभिगम्य द्रुतम् ।
तत्पादावभिवन्द्य मोदभृतया घ्रातोत्तमाङ्गौ तया
श्लिष्टौ दत्तमहाशिषौ न्यवसतां गेहे पितुर्नन्दनौ ॥१०९॥

मान्यान्मानयतो यथोचितमुभौ तावुग्रसेनादिकान्
　　गोष्ठीभिर्विविधाभिराप्तसुहृदस्सम्मोदयन्तौ भृशम् ।
विद्यातत्त्वविवेचनैश्च विविधैरानन्दयन्तौ बुधान्
　　लीलाभिः पितरौ वयोनुगतिभिश्चामोदयेतां सदा ॥११०॥

समरजयरमात्तपाणिपद्मावभयकरौ वसतोऽत्र रामकृष्णौ ।
अकृपणमलिनाऽऽप्तनित्यमोदासुमदुदया मधुराऽभवज्जगत्याम् ॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजो
　　यश्श्रीपुल्यउमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
　　काव्येऽयं नवमोऽत्र कृष्णविजये गोमन्तसर्गो गतः ॥११२॥

इति श्रीविद्वत्कविसार्वभौमीये श्रीवीरकृष्णविजयमहाकाव्ये
गोमन्तयुद्धाभिवर्णनं नाम नवमस्सर्गः ।
श्रीकृष्णभगवदर्पितो जयतु तराम् ॥

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## दशमस्सर्गः ।

ततो रामः कृष्णोऽप्यधिमधुरमास्तां पितृगृहे
कियन्तं कालं तौ विविधललितैर्यौवनगतैः ।
सरित्क्रीडाक्रीडावनिविहृतिसौधादिरमणैः
सुहृद्विद्वद्गोष्ठीनयविवरणाद्यैः प्रतिदिनम् ॥१॥

तयोर्गच्छत्येवं समय इह मोदेन सततं
व्रजं द्रष्टुं रामः कुतुकितमना जन्मवसतिम् ।
ययावेकः कृष्णं पितृसदन उज्झित्य मधुरा-
पुरे गोपान्गोपीश्चिरपरिचिता गा अपि भृशम् ॥२॥

जनिस्थानप्रेम प्रकृतिजमिह प्राणिविततेः
जनन्यादौ जन्माद्यतिपरिचितेः प्रेम सुदृढम् ।
यथोदीतं तन्वा सह शिशुदशायां जनपदे
पुरे सत्राक्रीडत्सखिषु च तथास्याद्वसतिषु ॥३॥

ममत्वं प्रादुष्ष्याद्विषयगतबोधक्रमदिशा
दशायां शैशव्यां करणसहकृत्या परिचितेः ।
दृढाया आजीवं नियतमिह तत्कीदृगपि वा
परेषां दृष्ट्या स्यात्त्रिदिवतुलितं तन्निजदृशा ॥४॥

अतो रामो दिव्यप्रकृतिमधुरां सौधनिवहैः
मनोज्ञैरुद्यानैर्विहरणगृहैश्चातिसुभगाम् ।

वधूरत्नैश्श्रीभिर्विविधविषयैश्चापि मधुरां
उपेक्ष्यागाद्गोपव्रजवनदिदृक्षुर्जनिपदम् ॥५॥

अभीयुस्ते गोपा बलमुपगतं सत्वरा उरु-
प्रमोदादश्लिक्षन्कतिचन चुचुम्बुस्सवयसः ।
असिञ्चन्नानन्दाश्रुभिरविरतं गोपकगणाः
कटाक्षेषुक्षेपैः कठिनमुपजघ्नुर्युवतयः ॥६॥

दधानस्त्वंवेषं वनचरगतं प्राक्परिचितं
बभाषे रामस्तैर्वय उचितरीत्या प्रियगिरः ।
सगोपैर्गोपीभिस्सकलकुशलप्रश्नमिलिताः
यथापूर्वं पृष्टः कुशलसमुदन्तं स्मितमुखः ॥७॥

व्रजं नः किं राम स्मरसि मधुरायां पुरि वसन्
महासौधैश्चित्रव्रजविलसितैः क्रीडनगृहैः ।
परीतायां क्रीडावनविततिभिर्देववनिता-
सदृक्षस्त्रीबृन्दैरिति कतिच नोचुस्तमबलाः ॥८॥

कियान्कालो जातस्त्वमिह बलदेवेक्षणपथं
प्रविश्येदं युक्तं किमिति मनुषे त्वत्सहचराः ।
सदास्मः क्रीडासु प्रतिदिनमये चारणविधौ
गवां रामेत्यूचुस्सुहृद इह गोपास्सवयसः ॥९॥

परे प्रौढास्सुस्वागतमभिवदन्तो नयनज-
प्रमोदाश्रूद्गारैस्सकलकुशलप्रश्ननिवहैः ।
समं रामेच्छामश्चिरमयि भवद्दर्शनसुख-
न्त्विदानीं सन्तुष्टा इह समवलोकेन भवतः ॥१०॥

वयं धन्या मान्या जगति भवतोर्बान्धवतया
त्वदागत्येदानीममरवरमान्या इह हलिन् ।
श्रुता वां दुष्कंसक्षपणमुखगोमन्तरणगा-
खिलक्षत्रानीकावलिपरिभवान्ता कृतितति: ॥११॥

शृगालस्याघातं नृपपदसुतस्थापनमुखं
श्रुतं वां गोमन्ते निजविविधशस्त्रोपगमनम् ।
श्रुत लोकातीतं रणमुखमहाशौर्यमपि वां
प्रवेशश्श्रीपुर्यां पुरजनमहेनातिमहता ॥१२॥

भवच्छौर्योद्रेकात्सकलनृपसङ्घोऽपि वशगः
प्रतिष्ठामापन्नौ धरणिरपि धर्मोऽपि जगति ।
सभाग्यास्सञ्जाता भवदुपगमाद्बन्धुसहिताः
वयं सर्वे राम त्वदुरुकृपया वर्धय सदा ॥१३॥

इति श्रुत्वा रामोऽभ्यवददथ तान्यादवगणे
प्रिया यूयं मान्या भवथ किल नौ बान्धववराः ।
इहैवास्मद्बाल्यं सकलमपि यातं शिशुदशा
गतक्रीडा जातास्सुखमिह भवद्भिः किल भृतौ ॥१४॥

इहावाभ्यां भुक्तं शयितमटितं क्रीडितमपि
प्रकृष्टेन प्रेम्णा सततमपि दृष्टौ स्वसुतवत् ।
भवद्भिस्सोढाश्चानुपदविपदोऽस्मद्धितकृते
गवां गोपैस्साकं वन इह कृतं चारणमपि ॥१५॥

कथङ्कारं ब्रूत प्रकृतिविकृतिर्नौ समुदियात्
व्रजे गोपा गावस्सुकुशलयुताः किं सुखभुजः ।

अये रम्यं बृन्दावनमिदमबाधं फलसुमैः
 समृद्धं घासौघैर्वहति यमुना पूतसलिला ॥१६॥
ततस्ते प्रत्यूचुस्तव भुजबलाद्राम कुशलं
 न काचित्पीडा नो भवति च गवां वा रिपुहर ।
वनं गाः पश्येति ब्रुवति निखिले गोपकगणे
 महोत्साहाद्बृन्दावनमविशदत्यन्तसुभगम् ॥१७॥
ददुर्गोपाः केचिन्मधुरफलजातानि सुरभि-
 प्रसूनौघान्केचिद्द्विकचकमलादीनि कतिचित् ।
सुगन्धद्रव्याणि प्रमदमदिरामिङ्गितविदः
 सुभक्ष्याण्येकेऽस्मै सतृडथ पपौ तां स मदिराम् ॥१८॥
हली हालापानभ्रमदरुणनेत्रोऽतिमदभाक्
 हलं धृत्वा स्कन्धे मुसलमपि दोरग्रगमसौ ।
किरीटी कर्णैकोल्लसदुरुमणीकुण्डलयुतः
 स सिष्णासुः कालिन्द्यभिमुखमिहैहीत्यभिदधौ ॥१९॥
अयं हालामत्तो वदति परिहासास्पदमिदं
 त्वितीयं मत्वाऽगान्न तदभिमुखं साथ यमुना ।
ततो रुष्टो रामो हलमभिसमुद्यम्य सरितं
 चकर्षाऽऽविध्यात्माऽभिमुखमखिलात्यद्भुनकरः ॥२०॥
तदाकर्षक्षुब्धस्वकनिखिलजीवावलिरसौ
 स्खलन्ती भीता सा बलहलसमादिष्टसरणिः ।
निजं मार्गं हित्वा कुटिलगमना मत्तमहिला
 यथा मध्ये बृन्दावनमुपजगामाशु यमुना ॥२१॥

वनान्तर्नीता सा दिनकरसुता भीतहृदया
परं नारीरूपिण्यथ वल्गुवाचानुनयतः ।
प्रसीद त्वं नाथ प्रतिगतविधानेन भवतो
विभो रूपं तोयं मम तु विपरीतं परिणतम् ॥२२॥

असत्यस्मि स्वाध्वव्यभिचरणतस्सर्वसरितां
सपत्नीनां हास्याऽभवमिह निजैः फेनहसनैः ।
प्रसीदाशु क्रोधं मयि समुपरुन्धि प्रभुवर
प्रसीदांघ्री मूर्ध्ना तव समभिवन्देऽतिमहितौ ॥२३॥

पथा त्वं मां येनादिशसि गमनीयामिह तथा
गमिष्यामि श्रीमन्कुरु मयि कृपां नाथ भगवन् ।
इति श्रीकालिन्दीगिर उपनिशम्यादिशदसौ
हलाकृष्टाध्वानुप्रवहणगता प्लावय वनम् ॥२४॥

मदादिष्टा बृन्दावनतलमिदं प्लावय सदा
झरेणात्मीयेन द्युमणितनयेऽथ व्रज सुखम् ।
यथेष्टं मत्कीर्तिर्भवतु यमुनाकर्षणभवा
जगद्यावत्तावत्प्रवह यशसा मे सह शुभे ॥२५॥

प्रजावासा बृन्दावनगयमुनाकर्षणमिदं
हलेनोचुर्दृष्ट्वा जयजय कृतं साध्विति मुहुः ।
ततो रामस्त्यक्त्वा रविदुहितरं तच्च विपिनं
व्रजं पृष्ट्वा गोपान्मुदितहृदयोऽगात्स मधुराम् ॥२६॥

व्रजायातं रामं महितमवलोक्यासनगतः
समुत्थायाभ्येत्यासनमदिशदात्मीयममलम् ।

सचारिव्लक्ष्णकृष्णं सहजनिजहार्दं प्रकटयन्
व्रजे पृष्टोऽभूताखिलकुशलमर्म्म प्रियनपि ॥२७॥
ततस्तातस्याग्रे प्रतनबहुगोष्ठीनिरतयोः
तयोर्मोदादौदन्तिकनरवरा एत्य विनताः ।
अवोचन् श्रीकृष्ण! प्रभुवर लसत्कुण्डिनपुरे
समावेशो राज्ञां भवति सबलानां पदुतरः ॥२८॥
हरे रुक्मिण्याख्या रुचिरतरुणी भीष्मकसुता
स्वयंवर्येदानीं भवति हि तृतीयेऽह्नि विहिता ।
इतो रुक्म्याहूता इह नृपतयो यान्ति सबलाः
त्वरावन्तो याताः कतिचन पुरी सा सशिबिरा ॥२९॥
विधिस्सर्वाङ्गीणासदृशशुभलावण्यलसितां
सिसृक्षुर्स्त्रीमूर्तिं निजनिपुणतादर्शनकृते ।
पुरन्ध्रीसौन्दर्यं त्रिजगति विभिन्नाङ्ककलितं
व्यधादाकृष्येमां शुचिरतत ईशेति मनुमः ॥३०॥
जगन्मोहिन्यात्माऽमृतविभजनेऽवातरदिति
श्रुतं श्रीमान्विष्णुस्त्वसुरगणसम्मोहनकृते ।
इमां सर्वातीतावयवसुभगां सर्वजगती-
विमोहायास्राक्षीदज इति तु नूनं स्वमनसा ॥३१॥
अनन्यादृग्रूपां गुणमणिनिधिं लब्धुमनसो-
नृपालास्संरम्भाद्कुरुभवनतो यान्ति बलिनः ।
निरुद्योगाः किं वा वयमिह वसामो यदुपते
किमेकान्तस्थानं समुचितमिति त्व नु मनुषे ॥३२॥

उदास्से वा कन्यामणिमसदृशं लब्धुमुचितं
विमृश्य न्नः कार्यं कुरु तुरमिति प्रोचुरखिलाः ।
निशम्य श्रीकृष्णाश्वरवचनजातं स्वहृदये
शितं शूलं न्यस्तं रिपुभिरिव सोऽमन्यत परम् ॥३३॥
विदर्भान्प्रस्थातुं सपदि निरणैषीच्च सबलः
सहन्ते शूराग्र्याः परपरिभवं नैव कमपि ।
अनाह्वानप्राप्तस्वपरिभवजक्रोधविवशो
गदां धृत्वा चक्रं हरिररमशाघादवबलम् ॥३४॥
प्रतिष्ठासुः कृष्णस्सपदि मधुरानाथमवदत्
विभो तिष्ठात्र त्वं न कुरु मधुरां शून्यविभुकाम् ।
पुरीं रुन्धेयुर्नोऽन्तरमिदमवेक्ष्यारिनिकराः
नयाध्वस्था नित्यं निकृतिमतयोऽस्मद्भिरहिताम् ॥३५॥
स कृष्णोक्तिं श्रुत्वा प्रतिगदितवान्कृष्ण भवता
सनाथास्स्मः पुर्यां सुखमिह विना त्वां नतु वयम् ।
पुरीं गोप्तुं शक्ता वससि किल यत्रेश भगवन्
वयं तत्र स्यामाखिलसुखभुजस्त्वद्भुजबलात् ॥३६॥
तथैवास्त्वित्यूचे तदनु हरिरेनं त्वथ रथं
समध्यास्य प्राष्ठात्त्वरितहृदयो यादवबलैः ।
रजोमूर्तिं धृत्वा नृपगणभयोत्पादनकृते
ततोऽस्मार्षीदन्तः खगपतिमरित्रातभयदम् ॥३७॥
पुरा सूर्यस्यास्ताद्गतवति हरौ कुण्डिनपुरं
गरुन्निर्यज्झंझामरुदुरुतरःपातिततरुः ।

खगाधीशः प्राप्तो हरिमभिनिषण्णा नृपतयः
निपेतुस्ते भूम्यामथ गरुडमैक्षिष्ट स हरिः ॥३८॥

अपृच्छत्तं कृष्णो ध्वजगतमयि स्वागतमिति
प्रियं तद्गच्छामो वयमिह समे कैशिकगृहम् ।
त्वमप्येहीत्युक्त्वा सबल उपयातो रथगतो
विदर्भा राजानोऽप्यतिमुमुदिरे वीक्ष्य तु हरिम् ॥३९॥

समालोक्यायान्तं हरिमभिययौ कैशिकनृपो
नयाभिज्ञस्स्वर्घ्याचमनमुखदानैः प्रियकरैः ।
समाहृत्य स्वीयं पुरवरमथावीविशदयं
महासौधं चालंकृतमतुलभूषाविततिभिः ॥४०॥

कथेनालोच्यालं हरिमतिथिमादर्तुमुचितं
समेतं स्वं गेहं सकलजगतीमण्डलविभुम् ।
प्रदाय स्वं राज्यं निजहृदि विनिर्णीय सहसा
सह भ्रात्रावोचत्कृतनतिनतिः कैशिकविभुः ॥४१॥

त्रिलोकीसाम्राज्यं वहसि भगवन्नंसयुगले
महालक्ष्मीं वक्षस्यपि निखिलशक्तीस्स्वहृदये ।
परात्मा त्वद्दत्ताणुमितधरणीरक्षणभरौ
समर्प्यावां किं वा सफलजननौ स्याव भवते ॥४२॥

परात्मा सर्वान्तर्हृदयवसतिस्त्वं क्षितिभरो-
द्धृतौ नानारूपैरवतरसि धर्मावनकृते ।
इदानीं कृष्णात्मा प्रबलतरकंसादिहतये
विधातुं नो धन्यान्गृहमुपगतो दर्शितकृपः ॥४३॥

फलैः पुष्पैः पत्रैरपि विमलतोयैः प्रणतिभिः
समर्चाभिर्भक्त्या स्मरणभजनाद्यैस्सुमनसा ।
प्रसीदेद्भक्तेभ्यस्सकलजगदीशस्स भगवान्
इति ख्यातिस्स्वात्मार्पणमिह च तूर्णं तु फलदम् ॥४४॥
स्वयं साक्षाद्विष्णो गरुडसहितश्छद्मरहितः
यदभ्यायाः गेहं जनयति फलं कीदृगिति नः ।
नजानीवः कृष्णैतदिह सकलं राज्यमपि ते
दिशावो गृह्णीष्वाखिलपरिकरैः पूरय कृपाम् ॥४५॥
त्वदागत्या तृप्ताः पितर इह नो जन्म सफलं
यशो धन्यं जातं कुलमपि हरे पावनमभूत् ।
ध्वजं छत्रं सिंहासननपि विभो चामरयुगं
बलं सर्वं दद्वो व्यजनमनुगृह्णीष्व कृपया ॥४६॥
प्रभाते श्वः कृष्णाऽभिषवणविधिं वैधमखिलं
धराराजेन्द्रत्वेऽखिलपरिकरैर्भूपसहितौ ।
विधास्यावस्त्वं संस्कुरु विहितपूर्वाङ्गकृतिभिः
मुकुन्दोपेन्द्रत्वे किल समभिषिक्तो मघवता ॥४७॥
न को वा भूपालः क्षम इह भवेदन्यथयितुं
जरासन्धो वास्मद्विधिमिममवेक्षाक्षम इति ।
सतु ब्रूते नित्यं नृपसदसि कृष्णोऽत्र न पुनः
समागच्छेन्मानी स्वयमनभिषिक्तो नृपपदे ॥४८॥
निषण्णस्त्वयाश्चीचे कथमिह स पीठे समितिगः
पुरं वा स्वं नैवास्त्वतिशयिततेजास्त्रिभुवने ।

असिक्तानां सिंहासनसमुपवेशो नहि मिलेत्
महामानी कृष्णः कथमिह विशेद्भूपसमितौ ॥४९॥
जरासन्धस्यारेस्तव गिर उपाकर्ण्य समितौ
समालोच्यावाभ्यां गृहमिदमधाद्भीष्मकविभुः ।
भवत्स्थित्यै तद्विग्रहशमनकांक्षी हृदि भृशं
हरे राजेन्द्रत्वे सुनुव इह नो सङ्कटमिदम् ॥५०॥
महाविष्णो! सिंहासनमिदमधिष्ठाय भगवन्
कृतार्थौ कुर्वावामिति तु वदति भ्रातृयुगले ।
उपागाद्दूतश्श्रीसुरपतिसकाशात्तदुभयोः
समीपं सम्भ्रान्तश्शिरसि धृतलेखोऽवददथ ॥५१॥
महेन्द्रो ब्रूते वां श्व उषसि भवन्ताविह हरिं
धराराजेन्द्रत्वे समभिषुणुतां भूपसहितौ ।
हरिप्रेष्ये सिंहासन उचित आनन्दविवशौ
घटैः प्रेष्यैर्दिव्यैर्भगवदुचितैर्द्रव्यनिवहैः ॥५२॥
इमामास्माकाज्ञां सकलनृपतिभ्यस्सुविशदं
प्रबोध्यानीयन्तां प्रभव इह कृष्णाभिषवणे ।
नृपा शून्यं रङ्गं विरचयत बार्हद्रथमुखैः
चतुर्भिर्योतीयादपर इह दण्डस्स तु भवेत् ॥५३॥
समाश्राव्येन्द्राज्ञामिति मघवदूतस्स्वशिरसा
धृतां लेखां दत्वा दिवमुपययौ कृत्यविदयम् ।
दिवोऽधायात्सिंहासनमपि मणिस्वर्णघटितं
जगन्नाथस्यार्हं बहुविधविभूषाभिकलितम् ॥५४॥

सुराणां राजेन्द्राभिषवणविधौ नास्त्यधिकृतिः
　　ततो युष्मान् शिष्मस्तदभिषवणे भूपतिगणाः ।
मुदा श्रीशं सिञ्चयादकृतकमतिर्योऽत्र नृपतिः
　　स कल्याणैर्युज्यादिह भुवि परत्रापि विविधैः ॥५५॥
इतीन्द्रो लेखायामलिखदथ तां कैशिकविभुः
　　गृहीत्वा हस्ताभ्यां शिरसि धृतवान्नम्रवदनः ।
परस्ताच्छ्रीकृष्णं त्वनयदवलम्ब्यात्मकरतः
　　गृहस्यान्तर्नानाविधमहितभूषाविलसितम् ॥५६॥
प्रवेश्यार्हैः खाद्यैर्मधुररसपेयादिभिरलं
　　वहूकारैः कृष्णं सवलमयमानर्च कुतुकी ।
सुसन्तुष्टः कृष्णस्सुखमवसदस्यां निशि गृहे
　　तदीये भूपास्ते विकलमतयो भीष्मकपुरे ॥५७॥
उपेतं श्रीकृष्णं गरुडसहितं यादवबलैः
　　अशेषैः कन्यार्थे विफलमतयस्स्वात्मसु नृपाः ।
निशायां तस्यां ते विविधविधिपर्याकुलहृदः
　　विधेयं सम्मन्त्र्य व्यवसितुमचेष्टन्त सकलाः ॥५८॥
ततो भुक्त्वा भूपास्त्वरितहृदया मन्त्रणविधौ
　　सभां जग्मुस्सर्वे समगधनृपा भीष्मकविभोः ।
विनिर्णेतुं कार्यं विविधमतयो विष्टरगताः
　　ततोऽवोचद्भूपान्मगधपतिरुच्चैस्स्वरयुतः ॥५९॥
अये! भूपास्सर्वे शृणुत मम वाक्यानि मतितः
　　ब्रवीमीह प्राज्ञा विमृशत विधे यं तु परतः ।

असौ यः कृष्णाख्यो भवति वसुदेवस्य तनयः
स कन्यार्थं प्राप्तो गरुडसहितः कुण्डिनपुरम् ॥६०॥
तदागत्या दोषो भवति नृपतीनामिह परः
यतो विष्णुस्साक्षात्स तु गरुडसाह्येन च नृपाः ।
समायातः कन्या यदि तु वृणुयादन्यमिह सा
यतेतास्याः प्राप्तौ सुदृढमथ कृष्णस्स्वबलतः ॥६१॥
पुरा त्वेकाम्भोधाविह जगति मग्नां किल धरां
अशेषां पाताले हरिरुदधरत्तां किटिवपुः ।
गृहीत्वा दंष्ट्रान्ते लघुतरमिव च्छत्रमसितं
महावीर्यं दृप्तं तृणमिव हिरण्याक्षमवधीत् ॥६२॥
वरत्राताद्धातुस्सुरनरसुखप्राणिनिवहैः
अवध्यत्वं लोके समुपगतवन्तं सुतपसा ।
नृसिंहात्मा वक्षो निशितनखराग्रैर्विदलयन्
महोदग्रं रक्षःप्रभुनरमटन्रुक्मकशिपुम् ॥६३॥
श्रुतं यन्नामैव त्रिभुवनगतं प्राणिनिवहं
महत्या भीत्याऽरूरुवदसुषु मृत्योरिव कथा ।
तमन्वर्थाभिख्यं त्रिभुवनपतिं रावणमसौ
जघान श्रीरामश्शितशरगणैस्सङ्गरमुखे ॥६४॥
दशग्रीवं कृत्वा तृणवदधिकक्षं चरितवान्
जलध्यन्तर्वीर्योद्धतिहतरिपुर्हैहयपतिः ।
हतो रामेणायं शितपरशुना च्छिन्नसुभुजा-
सहस्रश्शाखीव प्रथितजमदग्नेस्तनुभुवा ॥६५॥

द्विजच्छद्माखर्वः क्रतुगतबलिं धर्मिगमयं
धरां याचित्वाल्यां पदयुगत आक्रम्य सकलाम् ।
तृतीयं तत्क्षिप्त्वा शिरसि निगृहीतं द्युपततो
व्यधात्पातालस्थं कृतकमतिराच्याव्य भगवान् ॥६६॥

पुरा घोरान्वाजिष्वसुखरसङ्घं न्यहतवान्
वरेहसं तत्तारकमयमुखास्वष्टभुजवान् ।
चतुर्बाहुर्वासन्गरुडमधितिष्ठन्धृतशित-
स्वचक्राद्यैरत्यद्भुततममहस्वी स्वमहसा ॥६७॥

स्तनन्धय्येवायं शकुनिशकटारिष्टयमल-
प्रलम्बादीन्बाल्ये वृषभदनुजं केशिनमपि ।
महावीर्यं प्राहन्बलिनमपि कंसं गजमुखान्
पदातिर्बाहुभ्यां विदितमपरं वृत्तमपि वः ॥६८॥

तथानेकच्छद्माकृतिभृदतुलाद्योगबलत-
स्त्वकार्षीद्विश्वात्माऽद्भुतकृतिततिं विश्वनिवहे ।
ततो मन्ये गोपाकृतिधृदधुना कृष्ण इति य-
स्स नूनं श्रीविष्णुर्गरुडवहनेनापि भवति ॥६९॥

पदातेरेवाजिष्वभिमुखमवस्थातुमशकन्
न के वा वीराग्र्यास्स्युरिह गरुडस्थस्य तु कथम् ।
स च श्रीकन्यार्थे सबल इह यस्येत्स्वबलतो
न तिष्ठेत्को वापीत्यभिमतमिदं मे नृपतयः ॥७०॥

विमृश्यान्तर्गूढं त्विह तु करणीयं किमिति नः
विनिर्णेयं सर्वैर्नयसरणिमाश्रित्य सुदृढम् ।

जरासन्धस्येत्थं विषमगिर आकर्ण्य समितौ
सुनीथः प्रोवाच प्रभुगदितमेव प्रबलयन् ॥७१॥

विभूक्तं तत्सम्बद्धनमयुतमिह ग्राह्यमखिलैः
कृतं यद्गोमन्ते सुरनरवराशक्यमतुल्यम् ।
महत्कर्मोभाभ्यां हलमुसलचक्रानलशिखा-
वितत्याऽस्मत्सेनानिवहदहनं त्वद्भुततमम् ॥७२॥

अधिष्ठायेदानीं प्रबलगरुडं चेद्धरिरसौ
प्रयुंज्याच्चक्राग्निं क इह समरे स्थास्यति पुमान् ।
यदागत्यां पक्षद्वितयमरुदुद्धूततनवो
निषण्णा उत्पातादिव निपतितास्तस्य च कथम् ॥७३॥

यदीयं चेत्कन्या नृपतिमितरं त्वत्र वृणुयात्
तदानीं स्याद्युद्धं महदिह समेषां तु हरिणा ।
स कन्यार्थ्यायातस्स्वयमिह वृतेर्व्यञ्जनवशात्
नृपाणां दोषोऽयं तदुपगमनादागत इति ॥७४॥

करूषेशस्तूचे रदनवदनस्तत्र समितौ
सुनीथेनोक्तं यन्मगधपतिना चात्र वचनम् ।
पुरैतद्युक्तं मे प्रतिफलति किन्त्वाग्रहदशा
जिगीषुत्वाद्द्वेषादपि च ननु वच्मीह विषमम् ॥७५॥

परन्तु स्मृत्यर्थं किमपि भवतां वच्मि शृणुत
प्रभूतंसाः कृष्णागमनमिह नाश्चर्यजनकम् ।
गुणो वा दोषो वा क इह तु भवेत्कस्य च न तौ
यथाऽऽयातास्सर्वे वयमिह तथा सोऽप्युपगतः ॥७६॥

यथा कन्याहेतोर्वयमुपगतास्सोऽपि च तथा
वृणीते सा भूपं यमिह स भवेत्तत्पतिरयम् ।
कुतो युध्येत्केन स्वयमिह वृतौ धर्मविधुरः
प्रसक्तिः का योद्धुं भवति किल कस्यापि च नृपाः ॥

वयं यद्गोमन्तं शिखरिणमवारुन्ध्म सकलाः
कृतैक्याः को दोषो रणकृत इह स्याद्विभुवराः ।
स्वमोहार्थं कंसो वनमधिवसन्तौ बलहरी
महावीरौ हन्तुं निजनगरमानाययदिमौ ॥७८॥

जिघांसुस्तौ द्वारे वलिकुवलयापीडकरिणं
न्यधात्तं हत्वा श्रीहरिरविशदन्तस्थलमसौ ।
ततो मल्लौ रङ्गे निजभुजबलात्तौ विनिहता-
वुभाभ्यां तं कंसं परुषवचसं श्रीहरिरहन् ॥७९॥

वयं कंसाघातप्रतिकृतिपरास्तन्निहतये
स्ववारुन्ध्मानीकैर्बहुभिरखिला यादवपुरीम् ।
बलाधिवयं दृष्ट्वा गुरुभयभराक्रान्तहृदयौ
स्वगुप्त्यै गोमन्तं ययतुरिह चारुन्ध्म सहसा ॥८०॥

वनस्थानां दावानलनिहतिशिक्षां समुचितां
अभिप्रेत्य क्षिप्त्वा ज्वलनमदहामाद्रिमभितः ।
पदातिभ्यां युद्धं समुचितमनीकव्रजयुजां
नृपाणां नैवेति प्रथननयगाश्चापि विभवः ॥८१॥

निपत्याद्रेश्शृङ्गाद्दवदहनभीतौ रणतले
स्वरक्षार्थं वीरौ प्रतियुयुधतुर्बाहुबलतः ।

निजैश्शस्त्रैर्दग्ध्वा सकलमपि नस्सैन्यनिवहं
कलिं नश्शंसन्तौ विजयपथगौ वैष्णवबलात् ॥८२॥
तयोर्वाऽस्माकं वा कृतनिकृतिनिर्यातनपरे
रणे कस्माद्दोषो मिथ इह भवेद्दूष्य इह कः ।
स दोषः क्षात्रस्यैव हि निकृतिधर्माश्रयतया
भवेद्दूष्यः को वा न भवति कया वापि विधया ॥८३॥
इदानीं श्रीकृष्णो गमयितुमयं वैष्णववपुः
निजं तथ्यं तन्नो गरुडसहितोऽभ्यागत इह ।
प्रयस्यामः प्रीतिं जनयितुमलं तस्य विविधैः
उपायैः कृष्णश्श्रीहरिरिति तु नूनं स भगवान् ॥८४॥
वहेदन्यं कं वा गरुड इह वेदत्रयतनुः
न चेन्द्रादीन्वापि क्षितिगतनृपाणां क्वनु कथा ।
महातेजास्सर्वाप्रतिहतमहावीर्यबलवान्
निहन्ता सर्वेषामपि निजरिपूणां स्वबलतः ॥८५॥
युयुत्सुश्श्रीकृष्णो न समुपगतः कुण्डिनपुरं
स कन्यार्थे प्रीत्यै वयमिव समभ्यागत इह ।
कथं युद्धं यच्छेद्गुरणमहधर्मं परिहरन्
मनुष्याणां लोके स किल पुरुषेन्द्रोऽप्रकृतियुक् ॥८६॥
अमर्त्यानां लोके भवति पुरुषोत्तंस उदितः
स कर्ता लोकानां प्रणतजनपीडापहृदयम् ।
न चेर्ष्यामात्सर्याद्युपहतमतिर्बालिशमतिः
नच स्तब्धो नार्तो न कृश उरुशक्तिस्स भगवान् ॥८७॥

क वा याने कृष्णो विविधनिजहेतिव्रजयुतो
द्विषां हत्यै यायान्नपरवलसाह्यं स लषति ।
स्वयं शक्तो लोकानपि च सकलान् हर्तुमपि वा
समुद्धर्तुं सर्वेश्वर इह परात्मा स भगवान् ॥८८॥

इदानीं श्रीकन्यावरणमहसन्दर्शनकृते
समायातः प्रीत्यै न तु समितये यादवबलैः ।
अशेषैस्स्वैरेकैरपि स भगवांस्तन्मुद इह
प्रयस्यामस्त्वर्घ्याचमनमुखनानार्हणगणैः ॥८९॥

समाधायैवं तं विगतभयभाराः कुशलिनो
वयं सर्वे वर्तामह इति तु मे भाति हृदये ।
गिरो दन्तास्यस्वोचितनयगताश्शाल्वनृपतिः
निशम्योचे हृष्ट्वा स्वमतिमथ तास्साध्वनुनयन् ॥९०॥

न नो भीतिर्भाव्या जहिम इह शस्त्राणि विविधा-
न्यये निन्दाऽऽत्मीये बल इतरशक्तेर्नुतिरपि ।
समहो क्षत्राणां न भवति च धर्मोऽपि महतां
कुलेषूद्भूतानां न मतिरधमोदेति हि नृपाः ॥९१॥

अहं जाने कृष्णं क्षितितलगतं विष्णुमवनी-
भरोद्धृत्यै कंसाद्यखिलनृपसंहारमुखतः ।
उदीतं देवक्या उदरत इमं लोकमवितुं
वयं दग्धास्स्यामेत्यपि तदुरुचक्राग्निमुखतः ॥९२॥

समायाते काले भवति मनुजायुःक्षय इला-
तले नाकाले स्याद्गतसमयको जीवति न वा ।

तपोहानिं ज्ञात्वा स किल भगवानेव सकलान्
निहन्यात्तत्सत्त्वे बलिमिव तु तं जीवयति हि ॥९३॥
इमां यो निर्णीतिं मनसि तु निधत्ते स तु पुमान्
बिभीयान्नो कस्मादपि जगति नित्यात्मधिषणः ।
कदा वातोऽस्माकं समितिगतचर्चा त्वनुचिता
न कृष्णो योद्धुं नोऽभ्युपगत इदानीमिह नृपाः ॥९४॥
वृणीतेयं कन्या नृपतिमिह सा तत्पतिरसौ
प्रसक्तिः का वाजेरिह भवतु तत्प्रीतिरमला ।
ध्रुवास्माभिस्साध्या समुचितसमर्हादिविधिभिः
समीचीनं प्रोचे रदनवदनो मे मतमिदम् ॥९५॥
इति श्रुत्वा वाचो बहुविधगतीस्तत्तदुदिताः
परं भीतः प्रोचे सपदि समितौ भीष्मकविभुः ।
सुतो मे सन्दृप्तो निजभुजबलेन त्वतितरां
कदा वा श्रीकृष्णं हृदि न सहते किं नु विदधे ॥९६॥
रणोत्साही नित्यं सततदुरहङ्कारविवशः
बिभीयान्नो कस्मादपि जगति कर्तव्यमिह किम् ।
ह्रियेत श्रीकृष्णप्रबलभुजवीर्येण स तुरं
घटेतास्माद्भीष्मो रण इह न जीवेन्मम सुतः ॥९७॥
उदासे कन्यार्थे किमु भगवता योधनपरं
सुतं ज्येष्ठं किं वा भुजबलमदोन्मत्त इह तम् ।
विजानीयात्साक्षाद्धरिमखिललोकावलिविभुं
महामन्दः कृष्णं कथमिह स जीवेद्युधि सुतः ॥९८॥

न जीवेन्मे सूनुर्हरिकररथाङ्गानलशिखा-
विनिर्दग्धो भस्मीकृतनिजवपुस्संयुगगतः ।
महावीरस्साक्षाद्दिनकरवितीर्णात्मरथगः
शृगालस्तच्चक्रानलहृतनिजासुर्न किमभूत् ॥९९॥

गवां संरक्षार्थं नगमुदधरत्कन्दुकमिव-
स्वपाण्यग्रेणायं तदनु मघवोपेन्द्रपदवीम् ।
अदाद्दिव्यैस्सिक्त्वाऽमृतपरिमलद्रव्यनिवहैः
गवेन्द्रत्वं गावस्स्नुतनिजपयोभिस्तु हरये ॥१००॥

वसन्तं कालिन्द्यामतिखरगरं कालियमहिं
फणानृत्यैर्गाढं व्यथितसकलाङ्गं विरचयन् ।
दमित्वा पातालं त्वनयदपि केश्यादिहननं
स्मरत्स्वान्तं सीदत्यपि च मम गोमन्तसमरम् ॥१०१॥

गुरोस्सूनुं वैवस्वतजगत आनीय बलतोऽ-
दिशत्तस्मै लोकोत्तरकृतिततिं तस्य वितताम् ।
स्मरत्सीदत्यन्तःकरणमिह मे मानव इह
प्रपञ्चे नो तुल्यो भवति भगवानेव स हरिः ॥१०२॥

महावीर्यं कृष्णं विविधविधिभिस्सान्त्वनपरैः
प्रसाद्याहं पश्चात्तनुम इति निश्चित्य स नृपः ।
कथञ्चित्तां रात्रिं बहुविधविचारैरगमयत्
प्रवुद्धः प्रत्यूषे स्तुतिशुभरवैरास्त सदने ॥१०३॥

नृपास्ते ते त्वासन् स्वकविमलविश्रान्तिभवने-
ष्वथोपेता भूपा जगदुरिह वैदर्भनगरात् ।

मिथश्श्रीमत्कृष्णाभिषवसमुदन्तं तदहनि
प्रवर्त्यं वैदर्भे ध्रुवमिति तदीशेन कलितम् ॥१०४॥
निशम्यैके भूपास्तुतुषुरपरे दीनवदनाः
उदासीनाश्चान्ये त्रितयगतयस्तेऽखिलनृपाः ।
ततो दृष्ट्वा भेदं मिथ इह नृपाणां विकलहृत्
भयोद्विग्नो भूपव्रजमुपययौ भीष्मकविभुः ॥१०५॥
व्यतिक्रान्तिं राज्ञस्स्वयमिह कृतां कैशिकविभोः
समीक्ष्यान्तर्भीतो नृपतिगणभेदं च कलयन् ।
अगात्तान्भूपालान्प्रति कलयितुं सान्त्ववचनैः
भवेत्क्षात्रो धर्मस्सततमसिधाराव्रतसमः ॥१०६॥
विदर्भायामिन्द्रप्रहितसुरदूता उपययुः
समीपं प्रत्यूषे शिरसि कृतलेखा मघवतः ।
अवोचुश्शक्राज्ञां कथमपि च तं कैशिकविभुं
हरिं राजेन्द्रत्वे सुनुत नृपसाध्यो विधिरयम् ॥१०७॥
सुरैर्नानुष्ठेयो विधिरयमतश्शिष्म इह वां
अशेषैर्भूपालैस्सह मदनुशास्तेरिह दिने ।
इमां चेदाज्ञां नो न चरति नृपः कोऽपि विमतिः
स शिक्ष्यस्स्यादेषा मदनुमतिरित्याह मघवा ॥१०८॥
इति सुरपतिलेखां कृष्णपट्टाभिषेके
तदनुचरवितीर्णां कैशिकोऽगाद्गृहीत्वा ।
नृपतिवरसमाजं कुण्डिनस्थं प्रमोदात्
उपनयितुमशेषान्भूपतीन् सम्प्रबोध्य ॥१०९॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजो
यश्श्रीपुल्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्येऽयं दशमस्सुकृष्णविजये सर्गो गतः पूर्णताम् ॥११०॥

इति श्रीविद्वत्कविसार्वभौमीये श्रीवीरकृष्णविजयमहाकाव्ये राम-
यमुनाकर्षण श्रीरुक्मिणीस्वयंवरगमन श्रीराजेन्द्रपदवी-
पट्टाभिषेकानुसन्धानवर्णनं नाम दशमस्सर्गः ।
श्रीकृष्णभगवदर्पितो विजयताम् ॥

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## एकादशस्सर्गः ।

अथोषसि स कैशिकस्सुरपतेर्नयन् शासनं
विलिख्य शुभपत्रके पुरमुपाययौ कुण्डिनम् ।
हरेरभिषवाय तान्नरपतीन्प्रबोध्य स्वयं
समाह्वयितुमादरात्सदसि भीष्मकस्य स्थितान् ॥१॥

उवाच स ततो नृपाश्शृणुत देवराट्छासनं
चराचरजगत्पतिं शुनुत कृष्णमार्या नृपाः ।
नृपेन्द्रपद इन्दिरारमणमत्र सिंहासने
महोत्सवपुरस्सरं मणिमये मया प्रेषिते ॥२॥

कुबेरनिधिसम्भवैर्द्युघटितैर्घटैरष्टभिः
सुवर्णमणिमौक्तिकौषधिसुगन्धमिश्रै रसैः ।
अमर्त्यजगतीगतै रुषसि सिञ्चताल्युत्सुकाः
नृपेन्द्रपद ईश्वरं त्रिजगतां हरिं भूपकाः ॥३॥

धराभरनिवृत्तये कृतकगोपवेषं हरिं
न तर्कयत मानुषं भवत वीजवैरा नृपाः ।
नृपेन्द्रपदसेचनाभिषिकृतिशून्यतायास्तु नः
प्रशिष्म इह वो वयं भवत भूतिभोगाश्रयाः ॥४॥

यदि त्वतिचरेदिदं मदनुशासनं को नु वा
नृपस्स वधमाप्नुयात्कृतकधीरघात्मा जडः ।

स्वयंवरपदं नृपा विरहितं विधातुं पुनः
वसन्तु मगधेशचेद्यधिपरुक्मिशाल्वा इह ॥५॥
दिवो निधिघटाभिषेचनमिहाद्भुतं वीक्ष्य नो
ध्रुवं कलुषसंक्षयो भवति नो भयं श्रीहरेः ।
विधत्त हृदयं मया विदितमस्य तत्त्वेन यत्
मुदे स पुनरागतो न तु युधे विशुद्धात्मवान् ॥६॥
क्रथेन सहजेन मेऽतिथिमुपस्थितं श्रीहरिं
समर्हयितुमादरादिदमुपास्व सिंहासनम् ।
दिशाम्यखिलराज्यमप्यनुगृहाण वैदर्भकं
पुरं परिकरैस्सहेत्युदितमाढ्यभक्त्या यदा ॥७॥
तदाऽनुचर ऊचिवान्गगनतो दिवौकःपतेः
न चासनमधिष्ठितं समुचितं त्वया श्रीहरेः ।
इदं मणिमयं शचीपतिसमर्प्यमाणं दिश
क्रथेति गगनान्महासनमथ त्ववातारयत् ॥८॥
न वैरमयि दृश्यते भगवतो भवत्स्वन्ततो
बृहद्रथसुतेऽपि वा न भयमर्हमस्मात्तु वः ।
इतीरयति कैशिके मघवशापभीते मिथो
विधेयमननातुरे नृपगणे नभोवागभूत् ॥९॥
अये शृणुत भूपका अनुचरोऽस्मि चित्राङ्गदः
मघोन इह शासनं चरत कैशिकोक्तं यथा ।
त्रिलोक्यधिपतिः प्रजावनविधौ भवद्भद्रदृक्
प्रशास्ति हरिणा समं न तु विरुन्ध सन्धत्त च ॥१०॥

हरिस्तु भुवि कृष्ण इत्यवततार नाम्ना स्वयं
न जय्य इह देवदानवमुखैर्नृणां का कथा ।
षडाननसहायिना त्रिणयनेन वाऽऽयोधने
द्विषां लयहुताशनः प्रणतसर्वपीडापहृद् ॥११॥
विधाय परमां मुदं विविधसंविधानोत्तरैः
स्वराष्ट्रसुखिनो भवन्त्वनिशमङ्ग भूपालकाः ।
नृणां तु भुवि देवता नृपतयस्तदीशास्सुराः
तदीश उदितो वृषा तदधिपस्तु विष्णुस्स्मृतः ॥१२॥
स कृष्ण इह भूतले सकललोकसम्राट् स्वयं
नृपेन्द्रपदसेचनं क इह तस्य नाकांक्षते ।
न नोऽविकृतिरस्ति भूपतिपदाभिषेके नृपाः
प्रशिष्म इह वस्ततो व्रजत सिञ्चत प्रीतिदाः ॥१३॥
क्रथेन सह कैशिकेन च विमृश्य कार्यं चर-
न्त्वरं हरिसमर्पितामिह सुदक्षिणां गृह्णताम् ।
स्वयंवरणमण्डपं पुनुरुपेत चानन्दिनो
न चातिचरतानुशासनमितीन्द्र आह स्वयम् ॥१४॥
इतीन्द्रचरभाषणं गगनतो निशम्यादरात्
उपेत्य मगधाधिपानुमतिमप्यशेषा नृपाः ।
विहाय चतुरस्तु तान्निजबलैर्युतास्ते ययुः
विदर्भनगरीं मुदाऽद्भुतमहामहेक्षातुराः ॥१५॥
स भीष्मकनृपोऽप्यलं स्वसुतकृत्यतप्यन्मनाः
कथञ्चन बलान्वितोऽभ्युपययौ विदर्भां पुरीम् ।

स कैशिकविभुर्नृपाननुगतो मुदाऽवीविशत्
हरेर्निलयमात्मनस्सुरसभाप्रभाभासुरम् ॥१६॥
सुविस्मितहृदो नृपा ददृशुरादराद्दूरतः
विशिष्टहरिलक्षणोल्लसितमासनं तद्धरेः ।
विचित्रविलसन्महामणिविनिर्मितं विश्वतः
सुवर्णघटितं सुभूषितममर्त्यभूषोत्तरैः ॥१७॥
सुरद्रुसुमदामभिस्सुरभयत्समस्ता दिशः
चतुर्दिशमलंकृतं ध्वजपताकिकाचित्रकैः ।
समाह्वयदिव प्रभाविततिभिस्सुरानुच्चकैः
हरेरभिषवोत्सवे गगनचुम्बिनीभिर्भृशम् ॥१८॥
अमर्त्यगणशिल्पिना निजमतिप्रसारावधि
प्रयस्य हृदि निर्मितं विविधशिल्पकल्पान्वितम् ।
अशेषजगदीश्वरासनसमर्हभूषोज्ज्वलं
जगत्त्रितयराजकासनविलक्षणप्रक्रियम् ॥१९॥
विमानवरवासिनो नभसि दिव्यसिंहासनं
चतुर्दिशमथाक्रमन्नुपरि संस्थिता विश्वतः ।
सुरासुरपतिस्स्वयं प्रकटितात्ममूर्तिर्लस-
द्विमानमधिरुह्य सम्प्रसृतनेत्रसाहस्रकः ॥२०॥
तथाप्सरस ऊर्वशीप्रभृतयश्च विद्याधराः
महर्षिगणकिन्नरप्रभृतयो नभोमध्यगाः ।
जगुश्च नुनुवुर्हरेर्गुणकथानुसन्धायिनः
स्त्रियश्च ननृतुर्मुदा द्युगतदुन्दुभिध्वानकैः ॥२१॥

दिशां पतय उत्सुका निजदिशागतास्तुष्टुवुः
जगुश्च हरिसत्कथा अथ सुगन्धचूर्णं सुराः ।
स्वपञ्चतरुमूलसत्फलदलप्रसूनत्वचां
हरेश्शिरसि मङ्गलं मुदितचेतसोऽवाकिरन् ॥२२॥

निशम्य तुमुलध्वनिं नभसि विस्मितस्वान्तकाः
प्रफुल्लनयना नृपाः प्रविविशुस्सभां श्रीहरेः ।
प्रवेश्य द्दतिपूर्वकं निखिलराजकाभ्यागमं
जगाद हरये स्वयं सविनयं मुदा कैशिकः ॥२३॥

ततस्सकलमङ्गलोपहितमूर्तिमान्माधवः
महाभिषवमण्डपं सतु विवेश सम्भूषितम् ।
तदा गगनतोऽम्बुदा इव निधिप्रभूता घटाः
ववर्षुरमृतं हरेश्शिरशि कण्ठनद्धांऽशुकाः ॥२४॥

सकाञ्चनमणिव्रजं विविधगन्धचूर्णान्वितं
सदिव्यकुसुमव्रजं सकलपूतपाथोयुतम् ।
नदत्सु दिवि दुन्धुभिष्वमरपाणितालैस्समं
जयध्वनिषु गीतकैस्सह चरत्सु दिव्येष्वलम् ॥२५॥

ततो विधिपुरस्सरं मुनिगणार्षमन्त्रव्रजैः
नृपाश्च सुषुवुर्हरिं विविधसिन्धुमुख्याम्बुभिः ।
अधामरविभूषणैरलमकार्षुरीशं मुदा
सुराम्बरसुमस्रगावलिसुगन्धलेपादिभिः ॥२६॥

नृपानुमतितो हरिर्विविधमङ्गलालंकृतोऽ-
ध्यतिष्ठदथ मङ्गलैर्मनुभिरैन्द्रभद्रासनम् ।

रराज नितरां तदासनमधिष्ठितेश्श्रीहरेः
सुमेरुशिखरं यथाऽहनि तु मध्यमे भानुगम् ॥२७॥
हरेरुरसि या रमा त्रिभुवनैकसाम्राज्यगा
वसत्यनिशमादराद्भुवि सुदर्शयन्ती नृणाम् ।
स्वरूपमधुना बभौ नृपपतेरुपेन्द्रस्य सा
वितत्य सकलाङ्गसंहतिमलंकृतामासने ॥२८॥
विचित्रमणिमण्डलस्थगितहेमसिंहासन-
स्थितं सुकनकांशुकावृतममर्त्यभूषान्वितम् ।
महाभिषववर्धितस्वमहसा महाभासुरं
महेन्द्रमणिविग्रहं कमपि चिन्तयन्त्यऽद्भुतम् ॥२९॥
विचित्रविविधोपलद्युतिमहेन्द्रचापप्रभं
दुकूलतटिदञ्चितं घुसुमदामगन्धान्वितम् ।
अशेषजगतीजनावनकृतेऽर्थदिव्यामृत-
प्रवर्षुकमिलाम्बुदं मनुम इन्द्रनीलाकृतिम् ॥३०॥
महेन्द्रमणिपीठिकानिहितपादयुग्मं हरेः
रसालनवपल्लवप्रभमशेषधामास्पदम् ।
विनम्रनृपमण्डलीमकुटरत्नचित्रप्रभा-
पटावृतमिव प्रभात्यखिलकामितार्थान्दिशत् ॥३१॥
त्रिविष्टपततिं वलित्रितयतो निजान्तर्गतां
प्रशंसदुदरं हरेरमरगन्धमालाञ्चितम् ।
उरस्थलगतां रमामुचितमञ्चतीवादरात्
विलम्बिमणिदामभिर्गलतलाद्विभात्युच्चकैः ॥३२॥

सुवर्णमणिकङ्कणद्वयविराजमानं हरेः
करद्वयमरातिभीकरमुपाश्रिताभीकरम् ।
निजांसलसदङ्गदद्वितयतोऽङ्गदत्वं स्वकं
व्यनक्ति सकलात्मनामिव जगत्सु विभ्राजते ॥३३॥

पुरातनवधूत्वभाग्विरहिता चिराद्दुर्लभं
हरिं पुनरुपासितुं समभिषिक्तमभ्यागता ।
गलं पृथुलमौक्तिकव्रजनिबद्धहारात्मना
विहाय हरमादरादुपजुगूह गङ्गा तदा ॥३४॥

हरेर्वदनमिन्दिरासदनताश्रयात्पद्मतां
वहत्स्मितसुचन्द्रिकाप्रसरणैश्च पूर्णेन्दुताम् ।
व्यनक्ति नयनोद्गिरद्रससुधाभिवृष्ट्या जग-
त्कुटुम्बगतसौहृदं विविधमङ्गलाधायकम् ॥३५॥

विराजति शिरो हरेर्विविधरत्नराजिस्फुर-
त्किरीटसुपरिष्कृतं विततनीललोलालकम् ।
दिशो दश विभासयद्विसृमरप्रभापुञ्जतः
समाय परमात्मसन्मह इह स्फुटं व्यञ्जयत् ॥३६॥

नराकृतिधरः खगव्रजपतिस्थितो दक्षिणं
स पार्श्वमुपयन् स्थितौ क्रथसुकैशिकौ वामकम् ।
तथा महितयादवप्रवरवीरवारा हरेः
निषेदुरमलासने समुचितात्मसेवाजुषः ॥३७॥

उपेन्द्रपदसेचितो मघवता गवेन्द्रत्वभाक्
गवाभिषवणेन यस्स्वयमशेषलोकाधिपः ।

रवीन्दुकुलजन्मनां महिततेजसामग्रतः
स्वधर्मपरिरक्षिणां सुमहतां नृपाणामिह ॥४९॥
स्वयंवरणमण्डपं विविधभूषणालंकृतं
विशिष्टवहुविष्टरव्रजपरिष्कृतं विस्तृतम् ।
त्वदात्मजविनिर्मितं रुचिरचित्रकैश्चित्रितं
न वेत्ति तु भवान्कथं न्विति महान्हि मे संशयः ॥५०॥
रवीन्द्वनलतेजसः प्रथितपूतवंश्यान्नृपान्
स्वयंवरसमागताननतिथिधर्मतस्त्वं विभो ।
विशिष्य हतवानसि स्वबलसंयुतानर्चयन्
विमर्दमपि सैन्यजं कथमवेहि नो सर्वतः ॥५१॥
विषादमपि सैन्यसङ्घटनजं न जानासि किं
सुतस्य तव चेष्टितं महदिदं कथं वा विभो ।
मदागमनमेव ते हृदि न रोचते प्रायश-
स्त्वपात्रमिति मां विदन्न हतवांस्त्वमातिथ्यतः ॥५२॥
विहाय दिश मां सुतां परवराय पात्राय ते
मदागमनदोषतः किमिति कन्यकां नो दिशेः ।
जडो यदि तु कन्यकोद्वहनविघ्नकारी भवेत्
स घोरनरके सुपच्यत इति स्म मन्वादयः ॥५३॥
विवेश न ततस्स्वयंवरणरङ्गमध्ये तवाऽ-
कृतातिथिसमादरं गृहमवेत्य लज्जान्वितः ।
नृपेन्द्रपदभागहं परिभवासहिष्णुर्भृशं
विदर्भनगरीमुपागममिमां स्वविश्रान्तये ॥५४॥

स्ववेश्मनि तु कैशिकः पुनरिहातिथेयो मुदा
समग्रमकरोत्समादरणपूर्वकातिथ्यकम् ।
पुरा गरुडकेशवाविव महेन्द्रपुर्यां सुखं
समूषिव कृतादरौ क्रथसुकैशिकाभ्यां विभो ॥५५॥
इति स्ववचनाशनिव्रजनिपातनैर्मर्मशः
तुदत्यलमथोक्षजे व्यथितमानसो भीष्मकः ।
विनीतमृदुवाक्सुधास्रवणतः क्रुधाग्निं हरेः
शनैश्शमयुतुं ततः पुनरुवाच नम्राननः ॥५६॥
प्रसीद जगदीश्वर प्रणतलोकरक्षाकर
प्रसीद भगवन्प्रभो जडमविद्ययाच्छादितम् ।
प्रपन्नमव मां दिशन्विमलबोधचक्षुर्हरे
कथं पिशितचक्षुषो वयमवेम ईशं नराः ॥५७॥
सुसम्यगविमृश्य यत्क्रियत ईश कार्यं जनैः
न सिध्यति हि तद्धरे शरणमेम्यतस्त्वामिह ।
अवाखिलशरण्य माममलदृष्टिदो मत्क्रियाः
समास्सफलयन् भवच्छरणगामिनो नो भयम् ॥५८॥
विधेयमधुना मया हृदि विनिश्चितं वच्मि ते
स्वयंवरविधानतो न तु दिशामि मत्कन्यकाम् ।
प्रसीद भगवन्रमारमण रोषगामीह मा
भवाव कृपया श्रितं शरणगामिनं मां विभो ॥५९॥
इति ब्रुवति भीष्मके पुनरुवाच कृष्णो हसन्
सुतावितरणे व्रजेत्क इह नेतृतां ते विभो ।

न वक्तुमुचितं सुतां प्रदिश मेति देहीत्यहं
न वच्मि तनया स्वता तव पितुः परे के वयम् ॥६०॥
परन्त्विह ममान्वये सुभगरुक्मिणीदिव्यता
निमित्तमिति विद्धि भो तदपि वच्मि शृण्वञ्जसा ।
शुमेरुशिखरे पुराऽमरधरावतारेऽशतो-
रमां पुरत आदिशद्भुवि भवेति भर्ता हरिः ॥६१॥
नृणां जगति कुण्डिने नगर इन्दिरे भीष्मक-
प्रभुप्रियवधूदरे जनिमिहीत्यशात्तां तदा ।
अतोऽकृतकमत्र ते नृप वदामि वाक्यं स्वयं
निशम्य नितरां विमृश्य च विधेहि युक्तं क्रियाम् ॥६२॥
सुता तव तु रुक्मिणी न रमणी किल प्राकृता
रमैव विधिवाक्यतोऽजनि निमित्ततो वा कुतः ।
स्वयंवरविधेरियं त्वनुचिता नृपाणां विभो
प्रदातुमुचितार्हे ते नृपवराय कस्मै च न ॥६३॥
व्यवस्थितिरियं स्वयंवरविधानतस्तां श्रियम्
न देहि दिश तत्सदृग्गुणिन एकभूपालिने ।
स्वयंवरविधिं श्रियःप्रतिनिहन्तुमिन्द्राज्ञया
खगाधिपतिरागतो महमहं दिदृक्षुश्च ताम् ॥६४॥
त्वदीयविषयं यदाऽभ्युपगतोऽस्मि सौम्यात्मना
तदैव तु मयाऽखिलं कलुषमत्र सोढं विभो ।
नयामि सबलः कदाचन युधे निहन्तुं रिपून्
परं गरुडगश्शितायुधयुतो व्रजाम्याजये ॥६५॥

अतस्सबलमत्समागतिरियं क्षमां वक्ति ते
कथं नु कलुषं वसेद्धृदि नृपालकास्मादृशः ।
सुसत्त्वयुजि धर्मविद्यपि सुवंशजे त्वादृशे
कथं नु कलुषं वसेत्सततसूनृताभाषिणि ॥६६॥
पिता मम तु मान्यतां व्रजति सन्ततं भूपते
तदीयवयसा समस्त्वमपि मान्य एवासि नः ।
पुरीमव निजां सुखं नृपविलोकय क्षत्रियान्
पितेव कलुषं वसेत्कुपुरुषेषु शूरेषु नो ॥६७॥
सुतेष्विव तु वर्तनं पितुरशेषलोकेषु मे
सदापि सहजं विभो न कलुषं कदा वा वसेत् ।
स्वधर्मविमुखेषु तत्समयसङ्गतं शिक्षया
निवर्तत इहात्मनस्त्विति तु विद्धि तन्न स्थिरम् ॥२८॥
क्रथोऽयमथ कैशिकोऽप्यतिथिधर्मनिर्वाहणे
स्वराज्यमखिलं च मे व्यतरतां ततः पूर्वजाः ।
दशापि च दिवं गता अपि परे व्रजेयुर्दश-
त्विमौ सुचिरभोगिनाविह परां ततो निर्वृतिम् ॥६९॥
नृपा मदभिषेचने य इह सङ्गता मोदतः
क्रमेण समयस्य ते दिवमवाप्नुयुः पुण्यतः ।
अशेषशुभगा भवन्त्वभिमतार्थभाजो नृपाः
व्रजामि मथुरां पुरीं सगरुडस्समं सैनिकैः॥७०॥
विरम्य स ततस्सभां शमितहृत्समामन्त्र्य तान्
नृपान्जरठभीष्मकं क्रथमपि प्रियं कैशिकम् ।

विशिष्य रथसन्निधिं हरिरगाद्यथाध्याशितुं
मुमोद स तु भीष्मकः परनृपास्तु दीनाननाः ॥७१॥
ददर्श स तदाद्भुतं निजविराड्वपुर्धारिणं
सहस्रशिरसं हरिं पृथुसहस्रनेत्राञ्चितम् ।
सहस्रपदशोभितं स्वगतसर्वलोकोदरं
त्रिविष्टपविमोहकं नयनयुग्मतो भीष्मकः ॥७२॥
ततस्त्रिकरणैश्शुचिस्स नुनुवे हरिं भीष्मकः
प्रभो तव कृपाभराद्भवमहाम्बुधिस्तारितः ।
अमेयमहिमान्वितं कथमवैम्यविद्यावृतः
स्वरूपमिह तत्त्वतो निगमगोचर श्रीहरे ॥७३॥
न वेदयति वेदवाङ्मयमपीह ते ब्रह्मणः
स्वरूपमिदमीदृगित्यविशयं विभो का गतिः ।
कदाचिदगुणं वदेदविकृतं विशुद्धं महः
कदापि सगुणं जगद्विकृतिभाग्विचित्रात्मकम् ॥७४॥
स्वरूपमपि जागतं विविधमीश नो बुध्यते
विचित्रकृतितत्फलं करणगोचरं चेद्दूरे ।
कथं करणदुर्ग्रहं वचनदुर्वचं चेतसा-
प्यतर्क्यमगुणं महो विभु च वस्तु वेद्यं हि नः ॥७५॥
कदाचन झुषो भवेः कमठ एकदा स्याः किटी
नृसिंहवपुरेकदा भवसि वामनस्त्वेकदा ।
हरे दशरथात्मजो भवसि जामदग्न्योऽस्यहो
कमत्र मनुमोऽधुना भवसि रामकृष्णात्मना ॥७६॥

सुरासुरनरोरगाद्यखिलदेहितेजोव्रजात्
विलक्षणमक्षामहो वपुषि यत्र सन्दृश्यते ।
तदीश भगवंस्त्वदंशमिति ब्रुवन्ते बुधाः
वपुस्तु परिदृश्यते ननु महस्तदन्तर्गतम् ॥७७॥

क्रिया अपि विलक्षणाः प्रतिवपुश्च ते विश्रुताः
विलक्षणविशिष्टशक्त्यनुगता विभो वीक्षिताः ।
क्रियाकरणसाह्यतो यत उदेति देहे जडे
तदीश न हि दृश्यते सकलशक्तिमत्ते महः ॥७८॥

सृजस्यवसि संहरस्यखिलविष्टपान्लीलया
क्षणेन निजमायया निखिलजीवजालं भवे ।
विमोह्य नटयन्कदा च न सुखं च दुःखं विभो
सुभोजयसि नाटके नटवदत्र विघ्नः कथम् ॥७९॥

यदि त्वमगुणो भवेः कुत इदं जगन्नाटकं
प्रवर्त्य विविधेषु कर्मसु फलं द्विधा भोजयन् ।
प्रवर्तयसि जीवकान्विविधदेहपात्रेष्वज
प्रवेश्य नटसि स्वयं विविधपात्रधारी च भोः ॥८०॥

अमूर्तमिति मन्महे विविधदेहवेषोचितं
महस्तदनलानिलाद्यसदृशं विभुत्वाश्रयम् ।
गुणास्पदमशेषशक्त्यविकृतं वपुस्सङ्गतो
विकृत्यनुगतक्रियाकरणसाह्यतः किंचन ॥८१॥

वदन्ति निगमागमप्रभृतयः परं ब्रह्मत-
त्त्वमस्यज भवागुणस्सुगुण एव वा श्रीहरे ।

जडस्य मम चिन्तया किमनया विभो तावक-
प्रसादतरणिं भवार्णवसुतारकं कामये ॥८२॥
मनुष्यवपुषो द्विपद्भुजवदेकशीर्षस्य ते
प्रकृत्यनुगतक्रियावितितिदर्शिनः प्रायशः ।
क्वचित्क्वचिदमानुषाद्भुतमहाक्रियादर्शिनः
तवेश महिमा न मन्यतइहाद्भुतो मादृशैः ॥८३॥
अशेषजगदात्मनस्तव महाविराड्रूपिण-
स्त्वनन्तभुजपादमस्तकमुखाद्भुताकारिणः ।
कथं नु महिमाववुध्यत इहेश पाद्यञ्जसा
प्रसीद वरदो भवाच्युत नमो नमस्ते हरे ॥८४॥
इति प्रणतमूर्धकः प्रणिहिताञ्जलिर्भीष्मकः
स्तुवन् स हरयेऽदिशत्सुमणिमौक्तिकाद्यञ्चितम् ।
स्वभक्तिमभिसूचयन्महितहेमराशिं ततः
स्तुवन्निगमरूपिणं गरुडमाननाम प्रभुः ॥८५॥
ततस्स रथमारुहत्सगरुडो हरिस्सत्कृतिं
समाददशेषभूपतिवरानुपामन्त्र्य च ।
नृपैरनुगतः कियत्सरणिमाश्रितैश्श्रीहरिः
पुरीं तु मधुरां ययौ समभिषेकलक्ष्म्या युतः ॥८६॥
विदर्भपुरतो हरेस्स्वपुरनिर्गमानन्तरं
सुरा अभिषवाहृतां निजसभां दिवं प्रापिपन् ।
नृपा अपि च कुण्डिने विकलमानसा अन्वयुः
स्वयंवरणमण्टपं हरिगिरस्स्मरन्तो भृशम् ॥८७॥

प्रणम्य विनतासुतः पथि गते कियद्दूरके
हरिं स्वगमनोन्मुखोऽनुमतिमाप्य सोऽप्यव्रजत् ।
विषित्सुरथ कुत्रचिद्धरिकृतिं गुरुं कामपि
प्रकृष्टमतयः प्रभोः कृतिषु बद्धभावास्सदा ॥८८॥
हरिं पुरसमीपगं सहलिनं समाकर्ण्य ते
नृपेन्द्रपदसेचितं सकलमाधुरा मङ्गलैः ।
सुपूर्णकलशादिभिः प्रसवगन्धमाल्याक्षतैः
सुतूर्यनिनदैस्समं समभिजग्मुरत्युत्सुकाः ॥८९॥
द्विजाश्श्रुतिचतुष्टयीगतमहाशुभोदर्ककृ-
द्गिरस्स्वरयुताः पुरः पथि समुच्चरन्तो ययुः ।
रथस्य परतस्सुनर्तनपरास्सुवाराङ्गनाः
उपेन्द्रगुणगीतकैः परत आर्यतूर्यस्वनैः ॥९०॥
स्त्रियो विविधभूषणव्रजविभूषिताः पृष्ठतो
धृताभिनवमंजुलाञ्चलमहार्घचित्राम्बराः ।
स्वपाणिधृतकुंकुमाक्षतफलप्रसूनस्रगा-
द्युदञ्चितसुवर्णसद्रजतपात्रका अन्वयुः ॥९१॥
जयध्वनिभिरिन्दिरारमणपूततत्तत्कथा-
गताद्भुतकृतिव्रजं निजनिबद्धपद्यादिभिः ।
लयस्वरसमन्वितं श्रवणपेयगीताश्रयं
स्तुवन्त इह वन्दिनोऽप्यनुययुस्तथा मागधाः ॥९२॥
पुरः करितुरङ्गमव्रजचमूद्वयं पार्श्वयोः
पदातिबलमुद्यतायुधवरं तथा पृष्ठतः ।

महारथिरथव्रजोऽखिलजगद्रथारोहिण:
समस्तजगदीशितुर्यदुपते रथस्यान्वगात् ॥९३॥
विशिष्टबहुतूर्यनिर्गतमहारवो द्यां गत:
प्रतिध्वनिमिषेण दुन्दुभिरवानिहाकर्षति ।
दिवो दिविजचोदितानिव पुरप्रवेशे हरे:
नृपेन्द्रपदसेचनाधिगतराज्यलक्ष्मीविभो: ॥९४॥
सुधामयमहानृपायनगपार्श्वहर्म्यावले:
उपर्युपरिभूमिकास्समधिरुह्य पौराङ्गना: ।
प्रसूनविततिं रथोपरि हरेस्सुलाजाक्षतान्
ववर्षुरमराङ्गना इव सुगन्धचूर्णानि च ॥९५॥
क्रमेण समहामहो नृपवरोग्रसेनालयं
निनाय स नृपो मुदा सुमणिमौक्तिकाद्यैर्हरिम् ।
यथाविधि समर्च्य तं कनकराशिभि: प्रार्तथत्
सुराष्ट्रमखिलं दिशाम्यनुगृहाण कृष्णेति मे ॥९६॥
गृहे गृह उपायनैर्विविधरत्नकार्तस्वर-
व्रजादिघटितैरलं सुघनसारनीराजनै: ।
सुगन्धसुमदामभिर्हरिमपूजयन्मोदत:
नृपेन्द्रपदसेचितं पुरजना: पुरायागतम् ॥९७॥
तत: प्रतिजगाद तं नृपतिमुग्रसेनं हरि:
पुरैव गदितं मया न मधुराधिपत्यं वहे ।
त्वमेव विभुतां वहन्नव विभो न गृह्णाम्यहं
मतं मम सुनिश्चितं त्विदमवेहि भुंक्ष्व स्वकम् ॥९८॥

मनुष्व हृदि माऽन्यथा मम वचोऽत्र भिन्नाशयं
भवन्तमरिवर्गतो भुजबलेन रक्षाम्यहम् ।
व्रजाम्यनुदिशात्मनः पितृगृहं विमुत्वाश्रयः
सुभुंक्ष्व मधुरां पुरीमखिलयादवैर्बन्धुभिः ॥९९॥

इति स्वमृदुभाषणैर्बहुविधैस्समाधाय तं
महोत्सवपुरस्सरं पितृगृहं क्रमेणाव्रजान् ।
महाभिषवणश्रिया महितमूर्तिमान् श्रीहरिः
ननाम पितरं प्रसूमपि ततोऽग्रजं भक्तितः ॥१००॥

प्रयुज्य विविधाशिषस्त्रय उपालिलिंगुर्हरिं
स्वयंवरकथा अथाचकथदच्युतस्तान्प्रति ।
नृपेन्द्रपदसेचनाकलितवृत्तजातादिकं
वदन्नतितराममोदयदथान्यगाथा अपि ॥१०१॥

पितृसदन उवास श्रीहरिर्भ्रातृयुक्तो निजविविधविलासैस्तोषयन्बन्धुवर्गम् ।
प्रमदवनविहारैः क्रीडनैर्यामुनाद्यैः भुवनगतकथाभिः कञ्चनानेहसं सः ॥

आत्रेयान्वयसिन्धुकौस्तुभसिधीलक्ष्मीनृसिंहात्मजो
यश्श्रीपुत्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये पूर्तिमगात्सुकृष्णविजये सर्गोऽयमेकादशः ॥१०२॥

इति श्रीविद्वत्कविसार्वभौमीये श्रीवीरकृष्णविजयमहाकाव्ये श्रीरुक्मिणी-
स्वयंवरगमन, श्रीराजेन्द्रपदवीपट्टाभिषेक, श्रीभीष्मक-
हितोपदेशादिवर्णनं नामैकादशस्सर्गः
श्रीकृष्णार्पितो विजयतां तमाम् ।

श्रीदुर्गाम्बायै नमः ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## द्वादशस्सर्गः ।

कृष्णे गतेऽथ मधुरां गरुडेन साकं वीतात्मभीतिषु नृपेषु सभागतेषु ।
बद्धाञ्जलिर्नतशिराः पृथुलज्जितात्मा प्रोवाच भीष्मकविभुस्सकलान्प्रणम्य ॥

भूपास्स्वयंवरणकैतवतस्स्वपुत्र्याः बद्धं मयाऽपचरणं सुमहद्भवद्भ्यः ।
मत्वैकधा तु चरितं विधिनाऽन्यथैतत्कार्यं कृतं विधिवशः किमिहातनोमि ॥

तत्क्षम्यतां करुणया जगदीशकृष्णादेशश्श्रुतः किल विदर्भपुरे भवद्भिः ।
साक्षाच्चराचरविराड्वपुरिद्धवीर्यो लक्ष्मीपतिस्स भगवान्परमात्मरूपः ॥

आदेशमस्य शिरसा न वहेज्जगत्यां को वा सुरासुरनरादिषु सर्वशक्तेः ।
आज्ञां स्वयंवरकृतामतिवर्त्य तस्य जीवाम्यहं कथमिहेति बिभेमि भूपाः ॥

तत्क्षम्यतां मदपचार उरुः कृपार्द्राः गृह्णीथ सत्कृतिमणुं कृपयार्प्यमाणम् ।
अभ्यर्थयन्निति मणिव्रजहेमराशिदिव्याम्बरादिविविधार्थततिं ददौ सः ॥

सन्तुष्य ते नृपतयस्स्वबलैस्समेतास्स्वास्स्वाः पुरीः प्रययुरात्मसु संस्मरन्तः ।
दिव्याभिषेकविधिमद्भुतमच्युतस्य भव्यामरासनगतां श्रियमद्भुतां च ॥

ये दक्षिणापथगता मगधाधिपाद्यास्तेत्वत्र तस्थुरितरे स्वपुराणि जग्मुः ।
श्रोतुं स्थिता रहसि भीष्मकवाक्यजातमन्योन्यमन्त्रणपरा अपि भाविकार्ये ॥

स्निग्धात्मनो नयविदो नृपतीन्विलोक्य षाड्गुण्ययुक्तमथ भीष्मकभूमिपालः ।
श्लक्ष्णं त्रिवर्गसहितं नयसम्पदाढ्यं वाक्यं जगाद समयोचितमञ्चितार्थम् ॥

भूपोत्तमा भवदुदारवचस्समीक्ष्य कार्यं नयान्वितमिदं कृतवानिहेदृक् ।
क्षन्तव्यमन्यथयितुं कृपया भवद्भिर्नित्यापराधिषु सतामुचिता क्षमा हि ॥

पुत्रस्य चेष्टितमिदं सुविमृश्य भीतो मन्येऽहमीदृशजनानिह बालभावान् ।
कृष्णः परः पुरुष एष मनुष्यलोके संस्थापयिष्यति यशोऽसदृशं भुजाभ्याम्॥
धन्याङ्गनासु महिता किल देवकी सा याऽऽधत्त सर्वजगदीश्वरमात्मगर्भे ।
कृष्णं सिताम्बुरुहनेत्रममर्त्यवन्द्यं पुत्रं प्रपश्यति सदा जगदेकवीरम् ॥
धन्यस्स पुंसु वसुदेव उदीतपुण्यपुञ्जो जगत्यखिललोकनियन्तृशक्तिम् ।
साक्षाद्धरिं सुतमसूत विजिष्णुमाजौ विश्वैकवन्द्यपदयुग्ममुरुप्रभावम् ॥
लालप्यमानमिति भीष्मकवृद्धभूपं मध्येसभं स्वसुतदुर्णयभीतचित्तम् ।
श्लक्ष्णैर्वचोभिरुपसान्त्वयितुं बभाषे शाल्वस्स सौभपतिरिद्धमहामहस्कः ॥
राजन्नलं निजसुताय रिपुघ्नधाम्ने खेदेन नैव विजयो न पराजयो वा ।
नित्यो भवेन्नरपते रणरङ्गमध्ये धर्मस्सनातन इहैष नृणां प्रदिष्टः ॥१४॥
सूनुस्तवैष बलकृष्णयुगं विहाय साध्यो भवेज्जगति जेतुमिलापतीनाम् ।
कस्यापि नेति विदितं युधि भार्गवास्त्रनिर्यापितेषु गणवर्षुक इद्धतेजाः ॥
यादृङ्महारथवरातिरथादिवृन्देष्वप्येक एव महसा प्रतियोद्धुमीशः ।
को नाम भार्गवमहास्त्रनियोजकस्य सूनोस्तवाभिमुखमाजिषु संस्थितस्स्यात्॥
कृष्णस्स एष भगवान्पुरुषोत्तमश्श्रीविष्णुर्विजिष्णुरमरस्त्रिजगन्नियन्ता ।
रुद्रोऽपिवा त्रिभुवनेऽत्र न कोऽपिवान्यो जेतास्ति कालयवनं नृपतिं विहाय॥
गार्ग्यात्सकालयवनोऽप्सरसीह गोपाल्याख्याजुषीश्वरवरात्तमहाहिजातः ।
वध्यो न यादवकुलीनगणैर्न कैर्वा माहेश्वरेण तु वरेण समिद्धतेजाः ॥
गार्ग्यः पुरा मुनिवरस्तपसोर्ध्वरेतास्सद्ब्रह्मचर्यनियतात्ममनःप्रवृत्तिः ।
पत्नीं कदापि बभुजे न तपःप्रधानो वृष्ण्यन्धकादियदुकुल्यमहापुरोधाः ॥
स्यालः कदाचन नृपालमहासभायां गार्ग्योऽपुमानिति परं त्वभिशस्तवांस्तम् ।
रुष्टो विहाय च वधूं तपसे जगाम गार्ग्यस्सुतं शिवकृपाबलतः प्रपत्तुम् ॥

स द्वादशाब्दिकमुरुव्रतमाप्य भुञ्जंश्चूर्णं शितं त्वयस एकमुदग्रदीक्षः ।
पूर्णं व्रतं विहितवानथ तुष्टचित्तो रुद्रो दिदेश मुनये वरमिष्टमस्मै ॥
वृष्ण्यन्धकादियदुवंशजनिग्रहार्हं तेषामवध्यमपि तीक्ष्णमहस्समृद्धम् ।
पुत्रं त्वयाचत तथैव दिदेश रुद्रस्स्वाराधकेष्टवरदो हि सदा महेशः ॥
श्रुत्वा तु गार्ग्यमुनये वरदानमैशं वीराग्रणीरतनयो यवनाधिनाथः ।
गार्ग्यं समादरणपूर्वकमानिनाय स्वं वेश्म भक्तिमहितैर्विविधोपचारैः ॥
गोष्ठस्थितां युवतिमुत्कटसौभगाढ्यां गोपाल्यमिख्यमनुजात्मगताप्सरस्त्रीम् ।
शुश्रूषणाय नियुयोज मुनिः क्रमेण शैवानुशासनवशश्चकमे च तां सः ॥
तस्यामयं समुदितो महसा महीयानेनं विहाय च मुनिस्स ययावभीष्टम् ।
सम्पोषितस्सुतसहग्यवनाधिपेन नाम्ना सकालयवनो विदितः पृथिव्याम् ॥
पश्चाज्जगाम यवनेश्वर ऊर्ध्वलोकं दत्वा स्वराज्यमखिलं स्वभृताय चास्मै ।
तेजोऽस्य वीक्ष्य यवना विविधाश्शकाद्यास्सर्वे वशा निजबलैस्सततं श्रयन्ति॥
सोऽयं ह्यजय्य इह शैववरात्तशक्तिः केनापि यादववरेण विशिष्टतेजाः ।
कृष्णेन तेन यदुवंशभवत्वहेतोरशक्यो न जेतुमयमेक इहास्ति भूमौ ॥
आनीय तं यदि यतेमहि तं विजेतुं सिद्धिं व्रजेम विशयोऽत्र न कोऽपि भूपाः
बार्हद्रथस्य तु विभोस्स विनीत एव तस्यागमाय तु यतध्वमिति ब्रवीमि ॥
उक्त्वेति शाल्वनृपमिर्विरराम पश्चाद्बार्हद्रथः प्रतिजगाद गभीरभावः ।
एकस्स्वबाहुबलतोऽखिलभूपरक्षी बार्हद्रथोऽन्यमिह किं श्रयते स्वगुप्त्यै ॥
श्रेयो हि मे मरणमन्यसमाश्रयात्स्याद्युद्धे प्रदर्श्य भुजवीर्यमरेस्समक्षम् ।
सुक्षत्रियस्य बलवद्रिपुघात आजौ स्वर्गोपधायकतया विजयेन तुल्यः ॥
जातस्य कस्यचन मृत्युरिह ध्रुवा स्यात्सा साधु वर्त्मघटिता द्युसुखप्रदात्री ।
धर्म्या न चेदपयशो महदत्र नीत्वा तां नारकीं शुचममुत्र परां विदध्यात्॥

आत्मावनाय परसंश्रयणं न कुर्यां युष्मद्भयापगतये तु यतध्वमत्र ।
नो वारयामि यतनाद्भवतो नृपालाः प्रत्यात्मचित्तगतयो विविधा हि लोके॥
तद्रामकृष्णनयनाविषयः प्रयायाच्छाल्व क्षमस्त्वमसि खेरथगोऽत्र गच्छ ।
संश्रावयेह गतवृत्तमशेषमस्मै तद्भ्रातृधाम च समानय तूर्णमेनम् ॥
अष्टादशाजिषु पराजितनैजधामा विज्ञातदिव्यमहिमापि तयोस्तु भूयः ।
तौ जेतुमेव यतते मगधाधिनाथश्शूरो जिगीषति सदाप्यसुसंक्षयान्तम् ॥
सम्प्रेष्य शाल्वनृपतिं यवनाधिपोपकण्ठं समाहितमतिर्मगधाधिनाथः ।
सैन्यैर्ययौ निजपुरीमितरे नृपालास्स्वास्स्वाः पुरीं प्रतिययुर्मुदितान्तरङ्गाः॥
कृष्णे सुतस्य सरणिं क्रथकैशिकात्तसम्माननं हृदि समीक्ष्य महामहिम्नि ।
वैकल्यमाप्य स तु भीष्मकभूमिपालश्चिन्तां परामनुभवन्वसति स्म गेहे॥
कृष्णात्स्वयंवरनिवर्तनमाप्तचेटीवक्त्रान्निशम्य परितुष्टमना निकामम् ।
सारुक्मिणीनिजसखींप्रतिलज्जितात्माकृष्णाद्वृणोमि नपरन्त्विवितितांजगाद॥
कृष्णस्स रामसहितो मधुरानगर्यां तातस्य वेश्मनि सुखं निवसन्निनाय ।
कालं तनुं कमपि तैर्विविधैर्विनोदैरानन्दयन्नखिलबन्धुगणं स्ववृत्तैः ॥३८॥
कस्मिंश्चिदह्नि पितृसद्मनि रामकृष्णौ तत्तत्कथास्वभिरतौ मरुतो महान्तम् ।
शब्दं नभस्समुदितं भयदं जगत्यां सम्पातयन्तमुपशुश्रुवतुर्जनादीन् ॥
पेतुश्च वातनिहतास्तरवो महान्तस्ते सङ्घशो निपतिता मधुरापुरीस्थाः ।
आकालिकं प्रलयमापतितं समीक्ष्य बिभ्युर्नरा मृगगणा अपि पक्षिसङ्घाः॥
आकस्मिकं किमिदमित्यवलोकयन्तोऽपश्यन्जना गरुडमाश्ववरोहिणं खात् ।
श्रीरामकृष्णयुगलस्य तु निश्चलस्य तस्थौ क्षणादभिमुखं खगराड्विनम्रः ॥
सुस्वागतं गरुड ते विनतात्मतोषिन् कस्मादुपैषि विषयादिह के विशेषाः ।
कुत्राऽव्रजोऽस्मदुपकण्ठत आत्तवेगो ब्रूहीत्यपृच्छदतितुष्टमना स कृष्णः ॥

पश्चादुवाच गरुडोऽतिनतोत्तमाङ्गो बद्धाञ्जलिर्हरिमशेषजगत्यधीशम् ।
श्रीनाथ ते मृगयितुं सुखवासयोग्यं देशं रिपुप्रकरदुर्गममीश यातः ॥४३॥
श्रीरैवताद्रिनिकटेऽस्ति कुशस्थलीति काचित्पुरी पृथुतरा कमनीयलक्ष्मीः ।
सिन्धोस्तटे विविधपुष्पफलद्रुकीर्णावासोचितातिपृथुला च भवेत्तवेश ॥
एतावतीह गदिते गरुडेन कृष्णस्सम्मन्त्रणार्हनृपसद्म जगाम ताभ्याम् ।
भ्रात्रा खगाधिपतिना रहसि प्रकामं स्वं भावि मन्त्रयितुमाशु विधेयमीशः॥
बार्हद्रथस्य महतो हृदि वैरवह्निं जाज्वल्यमानमसकृद्बलिनस्समीक्ष्य ।
अल्पं स्वयादवबलं मधुरामदुर्गामल्पावनिं च स जगाद निजावनाय॥४६॥
बार्हद्रथोऽतिबलवान्न तु शान्तवैरो ज्ञात्वापि नो बलमिहाजिपराजितोऽपि ।
यस्येत्सदा निकृतये न इह प्रकारैस्तैस्तैर्मुहुर्मुहुरवध्य इतीरितो नः ॥
सैषा सुदुर्गमुखरक्षणसन्निवेशशून्या पुरी तनुधरातिबलासहिष्णुः ।
नालं महाजनबलौघविशालवासे भूताजिभिः प्रमृदिता सहते न चाजीः॥
आत्मीयरक्षणकृतेऽतिविशालदेशा गुप्ता सुदुर्गपरिखादिभिरर्थगम्या ।
रम्याखिलर्तुफलपुष्पवनैस्ससमृद्धां सर्वोत्तमभोगवसतिर्नगरीह कल्प्या ॥४९॥
सर्वोच्चभोगमहिताममरावती या त्रैलोक्यभोगकलिता विधुनोति लक्ष्म्या ।
निर्मापयामि धरणौ नगरीमपूर्वां भुञ्जन्तु भोगनिवहं त्विह बन्धवो मे ॥
नैषा पुरी प्रबलशत्रुविमर्दयोग्या बार्हद्रथोऽतिबलवान् सततान्तरार्थी ।
नात्रेषदस्ति हि सुखं निजबन्धुतायास्तूर्णं समुद्रपरिखां नगरीं सृजामि ॥
श्रीमत्कुशस्थलपुरीं परिणाहवृद्धामन्तस्समुद्रधरणिप्रणिधाय दीर्घाम् ।
गीर्वाणशिल्पिमुखतो रमणीयरूपां तां द्वारवत्यभिधया तु विधापयामि ॥
अद्यैव यादवगणाय निवेदयामो नोपेक्षणीय इह शत्रुरयं बलिष्ठः ।
श्रीरुक्मिणीस्ववरणे मदुपाहितस्य कांचिद्विधित्सति कृतिं पुनरत्र दुष्टः ॥

इत्थं निगद्य गरुडं स्वपदं प्रयाहीत्याभाष्य रामसहितः पितृसद्म कृष्णः ।
अभ्याययौ नगरनिर्मितिदत्तचित्तो वन्धुव्रजाय विनिवेदयितुस्स तस्थौ ॥
अत्रान्तरे त्वनुचरा धृततीव्रवेगा आगत्य कृष्णमवदन्जगदीश कृष्ण ।
युद्धाय कालयवनो महता बलेन तिष्ठत्यसौ पुरवहिस्त्वमथ प्रमाणम् ॥
बार्हद्रथप्रभृतयो वहुभूमिपालास्स्वैस्स्वैर्बलैर्वहुभिरिद्धनिजास्त्रशस्त्राः ।
अत्युत्सुकास्समितये पुररोधनाय यस्यन्ति तत्प्रतिकृतौ त्वरतां विमृश्य ॥
श्रुत्वा निजानुचरवाच उपेन्द्र ऐशं स्मृत्वा च गार्ग्यवरमात्मनि तद्वधाय ।
किञ्चिद्विमृश्य करणीयमुपायमन्तर्निर्णीय साम विनियोक्तुमथावभाषे ।५७।
निक्षिप्य कृष्णफणिनं घटमध्यभागे संछाद्य तं तु वसनेन दृढेन बध्वा ।
भृत्येन कालयवनाय निगूढभावस्स प्राहिणोद्धरिररं पुरवाह्यगाय ॥५८॥
बुध्वा हरेर्हृदयभावमथेङ्गितज्ञस्सम्पूर्य तं तु घटमुग्रपिपीलिकाभिः ।
सर्वाङ्गभक्षितमहिं तमलं विदित्वा स प्राहिणोत्पुनरसौ हरये घटं तम् ॥
भावं स कालयवनस्य बलाधिकत्वसन्दर्शकं विदितवान् हरिरेष साम्ना ।
साध्यो न चेति सुविमृश्य समाजुहाव बन्धून्सुमन्त्रणकृते निजसंसदोऽन्तः॥
प्राप्तो हि कालयवनो यदुपुङ्गवानां वध्यो न शैववरतो मुनिसूनुरेषः ।
बार्हद्रथादिबहुभूमिपतिव्रजेन नानाबलैस्सुविपुलैः पुररोधनाय ॥६१॥
सामप्रयुक्तमपि मे स्वबलातिदृप्ते जातं वृथारणसमुत्सुक एव शत्रुः ।
अस्मद्बलं तनुपुरी सहते न रोधं त्यागः पुरस्य तु नयोऽखिलयादवानाम्॥
अष्टादशाजिभिरलं परिमर्दितेयं दुर्गादिरक्षणविहीननिजाङ्गसंस्था ।
सङ्ख्यातिगात्मबलदृप्तबलिष्ठशत्रुसम्मर्दनं कथमिह क्षमते पुरीयम् ॥६३॥
सर्वापयानमधुना पुरतो विधेयं मन्ये कुशस्थलपुरी वसतिस्सुयोग्या ।
अद्यैव याम सकला रिपुदुर्गमां तां निर्मापयामि विपुलां सुखवासयोग्याम्॥

शीघ्रं प्रयात दिवसोऽभ्युदयावहोऽयं रुन्धेत्पुरीं रिपुरयं बलवान्न यावत् ।
स्वैस्स्वैः कुटुम्बनिवहैस्सह मुख्यवस्तुसंग्राहिणस्त्यजत हार्दमिहाङ्ग पौरा ॥
यद्यागतोऽतिबलवान् समराय दृप्तस्त्यागः पुरो नयपथे मुनिभिः प्रदिष्टः ।
आत्मावनास्पदगतिः पुरगामिनां स्याद्रिक्तां पुरीं पुरजनैर्न वृथा स रुन्ध्यात् ॥
एवं महासदसि कृष्णगिरो निशम्य पौरा हरे त्वदनुशासनमेव मानम् ।
आप्तोऽसि नोऽभ्युदयकृत्सततं तथैव कुर्मस्तुरन्त्विति सदस्यगणा अवोचन् ॥
सर्वेऽपि पौरनिवहास्स्वकुटुम्बयुक्तास्सन्तत्यजुः पुरमहो शुचिरोषितं च ।
भीता अरेस्तु परतस्सुखलिप्सवोऽमी देहं मुमुक्षव इवोत्तरभद्रदृष्ट्या ॥
यामान्तरे पुरवरं सकलं विहाय द्वारान्तरेण विविधैर्निजवाहनैस्ते ।
निक्षिप्तवस्तुनिवहैर्निजबन्धुयुक्ताः पौराः कुशस्थलपुरीं हरिणा प्रतस्थुः ॥
सायन्तने समयएव कुशस्थलीं ते सर्वेऽपि माथुरगणा विविशू रयेण ।
श्रीकृष्णचोदितदिशा सुखवासयोग्यसौधेषु तेषु मुदितास्स्वकुटुम्बयुक्ताः ॥
पौरान्प्रवेश्य स कुशस्थलभव्यपुर्यां निष्कण्टकं निशि समुष्य सुखं प्रभाते ।
दृप्तस्य कालयवनस्य वधं विवित्सुरध्वान्तरेण मधुरां पुनरीश आयात् ॥
यत्रास्ति कालयवनस्सबलः प्रदेशे बाह्ये पुरोऽरिनिवहेक्षणमार्गगामी ।
तस्याभवत्स तु निरीक्ष्य हरिं दधाव कृष्णोऽप्यधावदथ सोऽप्यनुदुद्रुवे तम् ॥
वक्राध्वना क्रमश एनमुदीतवेगो निन्येऽथ कालयवनं मुचुकुन्ददर्याम् ।
सुप्तस्सुखं स इह यत्र चिराद्धरिस्तत्पादं निहत्य हरिरेष तु तत्र तस्थौ ॥
पादाहतस्स मुचुकुन्दविभुर्विनीतनिद्रो रुषा निजशिरस्थलगं ददर्श ।
दृग्भ्यां तु कालयवनं नयनाग्निदग्धो भस्माभवत्स यवनः क्षणकालमात्रे ॥
पश्चाद्ददर्श हरिमीप्सितसिद्धिभाजं कस्त्वं कुतोऽभ्युपगतस्समदः क एषः ।
एवं स भूपतिरपृच्छदशेषविश्वनाथं हरिं तत उवाच स सर्ववृत्तम् ॥७५॥

त्रेतायुगेऽस्वप इहेश कलिर्युगोऽयं सोऽहन्तु यादवकुले वसुदेवसूनुः ।
कृष्णाभिधो धरणिभारनिवर्तनाय जातोऽस्मि भस्मवपुरेष तुरुष्कभूपः ॥
गार्ग्येण चाप्सरसि शैववरेण जातो वध्यो न माथुरगणैर्यवनाधिपेन ।
सम्पोषितो यवनजातविभुत्वमाप्तस्त्वन्नेत्रवह्निवशगोद्य स भस्मभूतः ॥७७॥
इष्टं वरं वृणु दिशामि नृपर्षिवर्य तुष्टोऽस्म्यनेन विधिना महसा महीयन् ।
श्रुत्वा हरेर्गिर इमा मुचुकुन्दभूपः काष्ठां परामलभत प्रमदस्य चित्ते ॥
कृष्णं जगाद भगवन्भवतः प्रसादात्पश्याम्यहो परममङ्गलदिव्यमूर्तिम् ।
या योगिभिर्युगश उग्रतपोविशेषैर्दृश्या न किं न्विह मे गुरुभागधेयम् ॥
साक्षात्कृतेस्तु परतो भवमोक्षदस्य कांक्षामि किं नु भवतोऽत्र विनाऽपवर्गम् ।
साक्षात्कृते निधिवरे स्वगृहे दरिद्रभिक्षा परत्र हि विभो परभोगकांक्षा ॥
क्षात्रं कियज्जगति दर्शितमात्मशक्त्या भुक्ताः कियन्त इह वैषयिकाश्च भोगाः।
धर्मोऽप्यनुष्ठित इहाफलकामपूर्वस्सिद्धस्त्रिवर्ग उचितो दिश मेऽपवर्गम् ॥
स्वर्गादिभोगविततिर्भुवि भोगतत्या तुल्या ध्रुवा न जननान्तरकल्पिकैव ।
यद्दुःखसङ्कलितमस्ति सुखं न तत्स्याद्वैषम्यमीषदविचिन्त्यमितीह मन्ये ॥
भोगा भुवीह विषमिश्रपयस्सदृक्षामिश्रास्तु दुःखनिवहैर्विविधैर्नितान्तम् ।
सौवर्गभोगविततिर्न तु दुःखमिश्रा तत्कालतो भवतु पश्चिमदुःखदोग्ध्री ॥
जीवस्य यावदिह कर्मदृढानुबन्धस्तावत्कुतस्सुखमिहास्ति परत्र कृष्ण ।
कर्मान्तराणि जनयेत्सभवान्तरोपभोग्यार्थकानि नियतं भवचक्रमेतत् ॥
ज्ञानं ममास्ति भवचक्रपरिभ्रमार्हं किं तेन कृष्ण दिश संसृतिबन्धछेदि ।
ब्रह्मात्मभावगमकं चिरगाम्यविद्यानिर्मूलकं नियतमोदद्बोधतेजः ॥८५॥
प्राप्तं कलिं वदसि घोरतमं मकुन्द नानाविधाघनिकरातिबहुप्रचारम् ।
नैवाधुना भवमुपैमि तपश्चरामि देहि त्वदंघ्रिकमले नियतां सुभक्तिम् ॥

त्वत्पादपद्मपरिचिन्तनलब्धतत्त्वबोधाभिधां दिश तरिं भवसिन्धुतारे ।
यावच्छरीरपतनं परतो विमुक्तिकान्ताकरग्रहणमोदमपि प्रभो मे ॥८७॥
एवं नृपर्षिमुचुकुन्दगिरो निशम्य कृष्णोऽतिहृष्टहृदयो लषसीह यद्यत् ।
तत्तद्भविष्यति तथैव नृपालमौले मुक्तोऽधुनैव भज मां भवबन्धहीनः ॥
इत्थं प्रसन्नहरिवागमृतं निपीय राजर्षिरेष तपसे तु जगाम हृष्टः ।
श्रीकृष्णदिव्यचरणौ प्रणिपत्य मूर्ध्नाऽऽनन्दाश्रुपूर्णनयनो गहनान्तरालम् ॥
येऽनुद्रुता अनुचारा यवनाधिपस्य ते कन्दरान्निजविभोरपुनर्निवृत्तिम् ।
संवीक्ष्य कृष्णमुचुकुन्दसमागतिं च शङ्काकुला ददृशुरेत्य तु भस्मराशिम्॥
अत्यन्तविस्मितहृदो यवनेशमृत्युकृत्ये कथञ्चिदनवेत्य निदानमेते ।
युद्धं विना क्षणश एव तु रूपहानिं सञ्चिन्त्य ते शुशुचुरात्मसु तस्य भृत्याः ॥
अत्यद्भुतं निजविभोर्मरणस्य वृत्तं तेऽरं प्रधाव्य जगदुर्नितरां रुदन्तः ।
सेनाधिपस्य सविधे भृशदीनवक्त्रा भस्मीकृतावनवभोधनमात्मनीनम्॥ ९२
सर्वे च ते मगधनाथमुखा निशम्य जातां तु कालयवनस्य मृतिं विषण्णाः ।
अत्यद्भुतां विफलितात्मसमुद्यमास्ते स्वास्स्वाः पुरीः प्रययुरात्मबलैस्समेताः
कृष्णस्ततो हतविभुं यवनस्य सैन्यं कृत्वा वशं च विपुलं वसु तद्गृहीत्वा ।
निन्ये समस्तमपि भूपवरोग्रसेनं सन्तः प्रतिश्रुतमलं परिपालयन्ति॥९४॥
कृष्णः कुशस्थलपुरीं सुकृतात्मकार्यो बन्धुव्रजार्हवसतिं विपुलां विधित्सुः ।
अत्यायतामखिलभोगयुतां त्रिलोकीचूडामणिं हृदि निवेश स राजधानीम् ॥
पश्चात्परीक्ष्य परितस्स कुशस्थलीं तां नालं स्वकीयवसतावुचितां व्यवस्य ।
संवर्ध्य पक्षयुगले विजने सिसृक्षुर्वास्तुक्रियां वितनुतेत्यशिषद्विविज्ञान् ॥
दुर्गं पुरस्य परितः पुरतो विधेयं वर्गैर्द्विषामनभिगम्यमतिप्रयत्नैः ।
स्वर्गे विशिष्टसुगुणाममरावतीं तां सर्गेऽतिशय्यविदधत्विह राजधानीम् ॥

सूत्रैर्धरातिविपुला परितोऽधिमाप्याघण्टापथानि पृथुलानि विधत्त विज्ञाः ।
सौधावलिर्विततबन्धुरसप्तभूमिरभ्रंकषात्मशिखरा परितो विधेया ॥९८॥
आदेशमित्थमुपलभ्य हरेः प्रवीणा वास्तुक्रियासु महता कुतुकेन युक्ताः ।
सूत्रैर्मुनिर्जदृशाऽतिविशालपृथ्वीं संशोध्य वास्तुविदितः पृथुपत्तनार्हाम् ॥
आसागरोपतटमाचसुरैवताद्रिमायामविस्तृतिगुणात्तरदं विशोध्य ।
आयुर्धनर्णसुखसर्वसमृद्धियोगमालोड्य ते समुपचक्रमुराशु कर्तुम् ॥१००॥
पक्वेष्टकाभिरुपलैस्सुधया सुभित्तीस्साराऽर्जुनादितरुदारुमयाढ्यकाष्ठाः ।
स्थूणा दृढाश्च मसृणा विनियुज्य लोहशंकादिभिः परिकरैरयतन्त धातुम् ॥
दृष्ट्वा विलम्बविधिमार्गमिमं हरिर्भूशिल्पिव्रजस्य दिवि शिल्पिवरं निदध्यौ ।
यो मानसेन विधिना क्षणशस्त्रिलोकीं स्रष्टुं समीष्ट इह भूरिविधां विचित्राम् ॥
सोऽनुस्मृतः क्षणत एव तु विश्वकर्मा स्थित्वा हरेरभिमुखं प्रणनाम मूर्ध्ना ।
बद्धाञ्जलिस्त्रिभुवनेश मया विधेयं कार्यं प्रशाधि करवाणि मुकुन्द कृष्ण ॥
त्वष्टारमाप्तमथ कृष्ण उवाच लोकशिल्पिन्ममानुचरवर्गयुतस्य वासे ।
अर्हां पुरीमिह विधत्स्व विशिष्टशिल्पकल्पां द्युलोकनगरीप्रतिबिम्बरूपाम् ॥
त्वष्टा विमृश्य तु जगाद विभो स्थलीयं नालं समुद्रमयि पृच्छ विशालदेशम् ।
तं योजनैर्द्व्यधिककैर्दशभिः परीतं स्रक्ष्यामि कृष्ण पुरमुत्कटसौभगाढ्यम् ॥
एवं निशम्य हरिरम्बुनिधिं जगाद सिन्धो व्यतीतदशयोजनसम्मितां गाम् ।
उत्सृज्य गच्छ पुरनिर्मितये ममात्र त्वं शोभसे च पुरतोऽनुगृहाण तूर्णम् ॥
आज्ञां हरेस्स्रजमिव प्रतिगृह्य मूर्ध्ना तीराद्विसृज्य तलमाशु जगाम पश्चात् ।
अम्भोनिधिर्निजकरैस्सुविधाय चोच्चैः को नानुपालयति सर्वविभोरनुज्ञाम् ॥
त्वष्टाऽऽत्मनाथ स चतुर्दशविष्टपाढ्यतत्तन्महानरगरसम्पदुरुप्रकर्षाम् ।
निर्मित्सुरत्र जगदीश्वरराजधानीं नानाविधाङ्गकलितां भुवि सञ्चकल्प ॥

प्राकारसप्तकमुदञ्चितसप्तलोहैरभ्रंकषं जलनिधिं परिखां गभीराम् ।
सालेषु सप्तसु विशङ्कटराजमार्गान् पार्श्वद्वयोल्लसितसौधविराजमानान् ॥
द्वाराणि षट्सु वरणेषु बहूनि धेयान्यन्तः प्रजासुखकृते प्रतिसालमत्र ।
सेयम्पुरी यत इहार्थवदाह्वया स्याच्छ्रीद्वारवत्यखिलविष्टपसुप्रसिद्धा ॥११०॥
आक्रीडखेलनगृहाद्यनुसालमाढ्यं प्रत्यालयं मधुरजीवनयन्त्रशालाः ।
स्थाप्या बहून्युपगृहाणि विशङ्कटानि गार्ह्योपयोजनकृते तरुवल्लिकाद्याः ॥
मध्ये सुवर्णवरणं हरिमुख्यबन्धुसौधावलीरजतभित्तिमयीरुदग्राः ।
स्तम्भैस्सुवर्णविहितैर्मणिपीठयुक्तैर्द्वारैस्सुरत्नविहितैर्बहुचित्रहृद्यैः ॥११२॥
तन्मध्यतः कनककुड्यमयानि सौधान्यन्तःपुराणि च पृथूनि मणीमयानि ।
स्तम्भैश्च रत्नरचितैर्मणिकुट्टिमैश्च चित्रैर्लतातरुशकुन्तमुखैर्व्यधत्त ॥११३॥
त्वष्टुर्मनो जगदपूर्वविशिष्टशिल्पचातुर्यदर्शनविधौ प्रससार यावत् ।
तावद्धिनिर्ममे इमां हरिराजधानीं लोकत्रयीगतमहानगरीविशिष्टाम् ॥
तत्रायसाद्यवरणे च तुरङ्गसैन्यं नानाविधायुधगृहाणि च गोगणं च ।
तत्तत्समर्हसदनैस्सुखवासयोग्यैर्नानाविधैः परिकरैस्समतिष्ठिपत्सः ॥११५॥
शुद्धारकूटरचिते वरणे द्वितीये दासादिशूद्रजनतां सकलां न्यधत्त ।
नानाविधोपकरणैरुचितालयेषु तद्भोग्यसर्वसुखदायिभिरच्युतोऽयम् ॥
ये वन्दिमागधगणा नटगायनाद्या वाराङ्गना विविधशिल्पगणप्रवीणाः ।
तांस्ताम्रनिर्मितविशालतृतीयसाले कृष्णो न्यवीविशदशेषसुखैकधाम्नि ॥
तुर्येतु कांस्यवरणे वणिजस्समस्तान्नानार्थसंव्यवहृतिप्रवणानशेषान् ।
शाकादिरत्ननिवहान्तसमस्तवस्तुविस्तारितापणयुजस्समवासयत्तान् ॥
सम्मिश्रलोहवरनिर्मितपञ्चमाढ्यसाले स्वराज्यविविधाङ्गकृतिप्रवीणान् ।
नानार्थशास्त्रनृपतिव्यवहारदक्षान् विप्रान्न्यवासयदपि श्रुतिधर्मनिष्ठान् ॥

षष्ठे तु रौप्यवरणेऽखिलबन्धुजालं सामन्तमित्रनिवहं प्रकृतीरशेषाः ।
अस्थापयद्धरिरुदारमना निकामं सर्वोपभोगकलितेषु महागृहेषु ॥१२०॥
सौवर्णसप्तममहावरणे विशिष्टबन्धुव्रजं सचिववर्गमुखं समस्तम् ।
कोशालयादिनिजमन्त्रगृहादिवर्गमस्थापयन्निजनिवासमहागृहाणि॥१२१॥
तन्मध्यतो बहुसहस्रमितानि हेमरत्नौघरूप्यरचितानि मनोहराणि ।
चित्रोत्तराणि विविधाङ्कविराजितानि शुद्धान्तवाससदनानि निजान्यधत्त ॥
दृष्ट्वाभिराममनिखिलाङ्कयुतामपूर्वशिल्पादूभुताकलनशोभितसर्वदिक्काम् ।
स्वस्वाधिवासकमनीयविचित्रसृष्टिं विश्वातिशायिनगरीं हरिराननन्द ॥
तन्निर्मितिस्त्रिजगदद्भुतनूत्नशिल्पा त्रैलोक्यचित्रतरकल्पनपण्डितस्य ।
त्वष्टुस्समस्तभुवनाधिपवासयोग्या कीदृश्यभूदिति कविः कलयेत्कथं वा ॥
अन्तःपुराण्यतिविचित्रविधानि तत्तद्वार्ह्यानुगात्युपगृहाणि च कल्पितानि ।
वैहारिकाणि सदनानि मनोहराणि सौधानि भूरिधरणीनि पुरे व्यराजन् ॥
भूलोकदुर्लभविचित्रफलप्रसूनवल्लीतरुव्रजभृतोपवनानि भान्ति ।
तस्यां पुरि प्रतिगृहावरणं विधात्रा सृष्टानि विश्वजनमानसकर्षकाणि ॥
सर्वे स्वकल्पितमहासदनेषु मोदपूर्णास्त्रिलोकरमणीयमहानगर्याम् ।
स्वैस्स्वैः कुटुम्बनिवहैर्निजवस्तुवारैर्देवा इवात्मनगरेऽखिलसम्पदाढ्ये ॥
पश्चाद्धरिः प्रतिगृहं मनसा विचिन्त्य वित्तर्धये निधिवरं स्वयमाजुहाव ।
शङ्खं निधीन्द्रमलकानगरीनिवासमभ्यागतं समशिषद्धरिरग्रसंस्थम् ॥
नाहं सहेऽनशितमीक्षितुमत्र दीनं कार्श्यान्वितं च जनमार्तमपुष्टदेहम् ।
नैवाधिबाधितमतो गृहिणां गृहेषु सर्वेषु पुष्कलनिधीन्परिकल्पयाशु ॥
इत्थं हरेरखिललोकविभोः प्रशास्तिं श्रुत्वा स शङ्खनिधिराज उपात्तमोदः ।
तद्वारकापुरगृहेष्वखिलेष्वधत्त नित्यव्ययेऽपि रहितान् क्षयतो निधींस्तान्॥

स्मृत्वाथ मारुतमुपस्थितमग्रभागे बद्धाञ्जलिं स्वमनुमान्य सुराधिनाथम् ।
क्षिप्रं समानय मदर्थमये सुधर्मां स्वर्गेऽमरा इव विशन्त्विह यादवेन्द्राः ॥

गत्वा जवेन मरुदिन्द्रमुपेन्द्रवाक्यमुक्त्वा मुहूर्तत उपाहृतवान् सुधर्माम् ।
यद्गामिनां सुनियता श्रुतिधर्मबुद्धिर्नाधर्मधीः कचिदिति प्रथितार्थनाम्नीम् ॥

तामध्यतिष्ठिपदथात्मसुवर्णसालमध्येसभां दशदिशः प्रविभासयन्तीम् ।
रेजे तया त्वतितराममरावतीं च सा द्वारवत्यभिभवन्त्यतुलात्मलक्ष्म्या ॥

अथ समधिगतार्थो द्वारवत्यामुवास त्रिभुवनकमनीयश्रीयुतायामुपेन्द्रः ।
अरिदुरधिगमायामात्मनोराजधान्यामखिलयदुकुलीनैर्बन्धुभिस्स्वैश्च मित्रैः॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजो
यश्श्रीपुल्य उमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये श्रीमति वीरकृष्णविजये सर्गोऽगमद्द्वादशः॥१३५॥

इति श्रीविद्वत्कविसार्वभौमीये श्रीवीरकृष्णविजयमहाकाव्ये
कालयवनवधद्वारकानगरनिर्माणवर्णनं
नाम द्वादशस्सर्गः ।

श्रीकृष्णभगवदर्पितो जयतु तराम् ।

# श्रीवीरकृष्णविजयमहाकाव्ये ।

## त्रयोदशस्सर्गः ।



इन्द्रो दिव्यमरावतीमिव बली भावी यथेन्द्रस्तले
　　पृथ्व्या भोगवतीमुपेन्द्र इह तां त्रैलोक्यभोगोच्छ्रिताम् ।
कृष्णो द्वारवतीं स्वबन्धुसुहृदां वर्गैस्समभ्युष्य सः
　　स्वान्भोगान्भुवि वैष्णवाननितरावाप्यान्व्यनक्त्यद्भुतान् ॥१॥

राज्याङ्गे विभुमुग्रसेनमकरोत्काश्यं पुरोधायिनं
　　सेनाधीशमवक्रविक्रममना धृष्टिं विकद्रुं बुधम् ।
मुख्यं मन्त्रिणमुद्धवादिसचिवानन्यान्दशास्थापयन्
　　सूतं दारुकमात्मनो युधि महायोधं च तं सात्यकिम् ॥२॥

इत्थं श्रीहरिरञ्जसाऽखिलविधेयांशान्विधाय स्वयं
　　निर्भीका इह दिव्यमानवमहाभोगान् सुभुंक्तेप्सितान् ।
युष्माकं न च शत्रुपीडनमिह स्यादीतिबाधापि वा
　　यन्नेहास्ति न तत्परत्र भवतीत्यूचे कृपालुर्निजान् ॥३॥

श्रीकृष्णोक्तिसुधां निपीय नितरां ते यादवा मोदतः
　　प्रत्यूचुस्त्रिजगद्विभो तव कृपापीयूषमग्नात्मनाम् ।
त्वत्सान्निध्यमहानिधौ लसति नस्सर्वार्थसंसाधके
　　भोग्यं न स्फुरतीतरत्सुखमिहान्यत्रापि पूर्णात्मनाम् ॥४॥

अस्मद्भाग्यबलेन सर्वजगतामीशे चतुर्वर्गदे
　　श्रीनाथे कुलभूषणे त्वयि परं शिष्येत भोग्यं हि किम् ।

सैषा द्वारवती विशिष्टविभवा सर्वश्रियां भूतले
कृष्ण द्वारवती सुखैकवसतिर्निर्मापिता राजते ॥५॥
आबाल्यं भगवंस्त्वया बहुविधा घोरापदस्तारिताः
स्वैरत्यद्भुतकर्मभिर्गिरिवरोद्धाराहिदान्त्यादिभिः ।
देवानामपि दुश्शकैस्स्वमहसा सर्वोत्तरेण प्रभो
कंसं यत्पशुनारमीश हतवान्घोरं च तं केशिनम् ॥६॥
गेहं गेहमहो महानिधिवरा आस्थापिता अर्थदाः
सौधावासकृते सुरेन्द्रनगरीसौधोपमा निर्मिताः ।
आढ्यालंकृतिभूषिताः पृथुतरा अभ्रङ्कषाश्श्रीहरे
यन्त्राणि प्रतिगेहमर्थसुकराण्यस्तीदृशी वा पुरी ॥७॥
त्रैलोक्ये सुखभोग्यवस्तुविततिस्सर्वा समृद्धाऽस्ति नः
उद्यानानि बहूनि नन्दनमुखस्पर्धीनि सन्तीह नः ।
आनीता हृदयङ्गमाभरणभृत्स्वर्गात्सुधर्मा सभा
किं न्यूनं भगवन्भवत्करुणया सिद्धे सुखे सर्वतः ॥८॥
आधिव्याधियुगं न वेत्ति जनता दीनः कृशः कोऽपि वा
भिक्षुर्वा न पुरेऽत्र ते त्रिदशवत्सन्तानहीनोऽपि वा ।
सर्वे सर्वसमृद्धभोगजमहानन्दामृतास्वादिनः
ब्रह्मानन्दरसानुभूतिमखिला अत्रैव विन्दामहे ॥९॥
एवं पौरजनाभिभाषणवरैस्सम्मोदितात्मा चतु-
र्वर्गद्वारवतीति सर्वजगतीख्याते महीभूषणे ।
तत्र द्वारवतीपुरे निजपरीवारैरशेषैस्सहो-
वासश्रीहरिरात्मदिव्यललितैरानन्दयन्विष्टपान् ॥१०॥

प्रादाद्रैवतनामको यदुकुलालङ्कारचूडामणी
रामायात्मसुतां सुतामिव गिरेर्मायामिव श्रीहरेः ।
सृष्टां शक्तिमिव त्रिलोकपुरुषव्यामोहने वेधसा
सर्वाङ्गीणसरत्नवोज्ज्वललसल्लावण्यपूराकृतिम् ॥११॥

तां रेवत्यभिधां व्युवाह जननीं चोतोभुवोऽन्यामिव
श्रीकृष्णानुमतां वधूं स्वसदृशीं रूपेण चाढ्यैर्गुणैः ।
रामो रूपगुणोच्चवीर्यसुमहोलोकाभिरामश्शुभे
लग्ने माङ्गलिकाखिलोत्सवमहासंरम्भसम्भाविते ॥१२॥

रेमे तत्र तया मणीमयमहासौधेषु हालाप्रियो
रामः कुञ्जगृहेषु रैवतगुहास्वाक्रीडभूमीषु च ।
रेवत्या सह रामया बहुविधैश्शृङ्गारभावैर्मुदा
तौ तृप्तौ तु मिथोऽनुरक्तहृदयावानन्दपूर्णौ सदा ॥१३॥

श्रीमद्द्वारवतीपुरस्थजनता त्रैलोक्यभोगव्रजं
भुञ्जाना भुवनान्तरस्थविषयव्रातोपभोगाप्तये ।
वैराग्यं परमं गताऽरिनिवहोद्भूतव्यथावर्जिता
ब्रह्मानन्दविभूतिदृष्टिरनुसन्धत्ते परं योगिवत् ॥१४॥

वृत्तं जागतमात्मचारमुखतश्शृण्वन्नुपेन्द्रो यदू-
त्तंसैरिन्द्र इवामरैस्सह सुधर्मायां विमृश्य स्वयम् ।
तत्तत्कार्यविधानुरूपमसकृत्कर्तव्यमुद्बोधयन्
धर्मं नीतिमवन्निजव्यवहृतेरानन्दयेन्नित्यशः ॥१५॥

प्रातर्नित्यकृतिव्रजस्य चरणैश्शैवार्चनैस्सद्द्विजा-
शीर्वादग्रहणैः कलार्थकलनैर्दानैर्द्विजेभ्योऽन्वहम् ।

मध्याह्ने कृतिभुक्तिविश्रमजगत्कार्यावलोकैः पुनः
सायं क्रीडनकौतुकैर्गमयति स्वैः कालमानन्दतः ॥१६॥
गच्छत्स्वेवमहस्सु तत्र कतिषु श्रीद्वारकायां सुखं
प्राप्तौ दूतवरौ पितृष्वसृपतेर्लेखाहरौ श्रीहरेः ।
सान्निध्यं शिशुपालकोपयमनायाह्वायकौ चेदितो
लेखां तत्प्रहितां स्वयं समपठत्कृष्णस्समग्रां शुभाम् ॥१७॥
रुक्मिण्याश्शिशुपालकस्य भवितोद्वाहः पुरे कुण्डिने
प्राजापत्यविधानतोऽत्र सुशुभे लग्ने समागम्यताम् ।
श्रीमद्भिस्सह बन्धुभिस्सहपरीवारैरवश्यं त्विति
श्रीमच्चेदिपतेर्गिरोऽत्र हरिसंरम्भातिरेकं व्यधुः ॥१८॥
रुक्मी द्वेष्टि सदा स भीष्मकनृपस्सम्बोधितोऽपि स्वयं
सूनोस्तस्य च मागधस्य विवशो नालं विधातुं कृतिम् ।
रुक्मिण्याः परिणीतिमेवमधुना बार्हद्रथोऽचीकरत्
पश्याम्यात्मबलात्तदन्यथयितुं गच्छामि तत्कुण्डिनम् ॥१९॥
निश्चित्येत्थमथाच्युतस्त्वनुचरावादृत्य पाणिग्रहा-
वेक्षायै वयमुत्सुकास्सहपरीवारास्सबन्धुव्रजाः ।
आगच्छाम इति स्म मामकगिरो ब्रूतामधीशाय वा-
मित्याभाष्य चरौ तु चेदिनगरं स प्राहिणोच्छ्रीहरिः ॥२०॥
चाराः केऽपि परेद्युरेत्य भगवन्भावी विवाहश्श्रुतो
रुक्मिण्या दमघोषजस्य शिशुपालाख्यस्य संरम्भतः ।
यं पुष्णाति समं सुतेन मगधाधीशस्सदा प्रेमतः
पित्रा तेन समर्पितं रणमखे मत्वातिशरं विभो! ॥२१॥

आगत्य स्वयमीश मागधपतिस्तत्कुण्डिने भीष्मकं
चैद्यायावृणुतेश रुक्मिमुखतस्तां रुक्मिणीं कन्यकाम् ।
आयत्तस्तनयस्य सोऽपि च तथैवास्त्वित्यवोचन्नृपः
मासात्पूर्वमिति श्रुतं परविधौ मानं भवान् श्रीपते ॥२२॥

श्रुत्वा चारमुखाच्च चिन्तितविधं वृत्तं परेर्ष्याकुलः
कृष्णो यादववीरसंहतिमुवाचोद्वाहयानं निजम् ।
सन्नद्धैस्सह सैनिकैश्च उषसि प्रस्थातुमुद्यम्यतां
योधाग्र्यैः कलितायुधैरिति समानाजिज्ञपच्चाच्युतः ॥२३॥

तां लेखामपठत्पितुश्च सविधे भ्रातुश्च मातुस्ततः
प्रस्थानं च परेऽह्नि नः परिणयं द्रष्टुं पुनः कुण्डिने ।
आशास्स्वाऽम्ब नमस्करोमि चरणावित्यात्मजं प्रेमतः
संश्लिष्याङ्क वरो भवेत्यभिदधौ सा रुक्मिणीमाहरन् ॥२४॥

कृष्णः प्रस्थितवास्ततस्सुसमये प्रातः परेद्युस्सहा-
नीकैर्योधवरैस्स्वबन्धुसुहृदां वर्गैरुपात्तायुधैः ।
क्षात्रं धर्ममनुस्मरन् स्वहृद्धये तां रुक्मिणीं स्वां श्रियं
चैद्यायासदृशाय नेतुमरिभिः प्रत्युद्यतामाग्रहात् ॥२५॥

प्राप्तौ कुण्डिनपत्तनं परदिने श्रीरामकृष्णौ परी-
वारैस्स्वार्थविनिर्मितालयवरेष्वासञ्जितौ बन्धुभिः ।
दृष्ट्वा राजकमात्मसैन्यसहितं बार्हद्रथस्याभितः
तूर्ष्णीं तत्तु दिनं प्रणिन्यतुरुभौ तत्कौतुकावेक्षिणौ ॥२६॥

श्रुत्वा कृष्णमुपागतं स्वहृदये साऽचिन्तयद्रुक्मिणी
भ्रात्रा मे विहितस्स्वयंवरविधिः पित्रा पुनर्वारितः ।

जातश्चेत्स समाजविष्टरगतं लोकैकनाथं हरिं
कृष्णं प्राणपतिं स्रजा वृतवती सिद्धेप्सितार्थाऽभवम् ॥२७॥
श्रीकृष्णोऽवृणुत स्वयं प्रदिश मे कन्यां तवेति श्रुतं
चेटीभ्यः पितरं निवार्य सहजो द्वेषी च तस्मिन् सदा ।
रुक्मी मेऽनुचितं स्वयंवरविधिं त्वस्थापयत्तं पुनः
कृष्णोऽवारयदात्मनो विवरणैरित्यप्युपाकर्णितम् ॥२८॥
तातो मे विवशस्सुतस्य मगधाधीशस्य चार्थव्रजे
स्वातन्त्र्येण चरेन्न कुत्रचिदयं वृद्धस्सुतैकप्रियः ।
किं कुर्यामबला पितुश्च विवशा भ्रातुश्च भर्तृग्रहे
बद्धा धर्मनिबन्धपाशनिवहैश्चैद्यो न मे रोचते ॥२९॥
हित्वा केसरिणं मृगेन्द्रतनया भर्तारमिच्छेन्मृगं
सर्वाजय्यमुपेन्द्रमुग्रमहसं विश्वैकवीरं विभुम् ।
राजेन्द्रं रमणीयविग्रहरुचिं पुंसां च सम्मोहिनं
सर्वज्ञं परिहाय सर्वजगतीनाथं परं किं भजे ॥३०॥
यः कंसं शमिता क्रताविव पशुं यूपात्समाकृष्य त-
त्केशग्राहमशेषभूपतिसभामध्ये जघान स्वयम् ।
आसीनं नृपविष्टरात्परुषवागालापिनं सिंहवत्
सूत्प्लुत्यात्मसमाजतः पितृमुखान्निन्दन्तमीर्ष्याकुलः ॥३१॥
यो गोवर्धनमुद्धार करतश्छत्रं वितन्वन्गवां
संवर्ताम्बुदसृष्टवृष्टिविपदश्शक्रेरिताया रुषा ।
रक्षार्थं जगदद्भुतेन विधिना गावो गवेन्द्रत्वदाः
आसन्निन्द्र उपेन्द्रतां समदिशन्यस्मै समस्तेन कः ॥३२॥

येनाष्टादशवारमाजिषु पराकारि स्वजामातृत-
त्कंसात्यद्भुतहिंसनोदितरुषा नीतासु सामन्तकैः ।
भूपालैरमितात्मसैन्यसहितैस्साकं स बार्हद्रथः
त्यक्त्वा तं हरिमत्र चैद्यहरिणं भर्तारमाप्नोमि किम् ॥३३॥
केशी दुर्विषहेद्धवीर्यकलितो द्वेधाकृतात्मा हतः
पाणिभ्यां स वृषासुरोऽपि निहतश्शृङ्गेण गोहिंसकः ।
कलिन्दीगतकालियाहिरितरादम्यः फणामण्डली-
नृत्येनांघ्रियुगस्य येन दमितः पातालगामी कृतः ॥३४॥
दृष्ट्वाऽऽकर्ण्य च बाल्यतः प्रभृति तल्लोकोत्तरं वैष्णवं
कृष्णस्यात्यद्भुतधाम मागधरणेष्वालोक्य चापि स्वयम् ।
भ्रातुर्मे विषमो हि मागधमहामोहो विरोधो हरौ
तत्पाणिग्रहणे मदीप्सिततमे प्रत्यूहभूतो बत! ॥३५॥
वीर्येणाखिलवैरिवीरनिवहप्राणानुकर्षाद्रणे
सौन्दर्येण जगत्त्रयीगतवधूमानाभिकर्षाच्च यः ।
विज्ञानेन गुणैरपूर्वमहसा योगीन्द्रहृत्कर्षणात्
कृष्णोऽत्यद्भुतचारितेन सकलाकर्षात्स भर्ताऽस्तु मे ॥३६॥
वीरो नायुधधारणेन सकलो लोके स्मृतः पण्डितैः
पक्षिव्रातनिपातिनोऽपि धनुषा मृत्पिण्डतस्ते तदा ।
वीरस्स्यात्स रणे प्रयुज्य निशितं हेतिव्रजं वैरिणो-
हत्वा हेतिकिणाङ्कितोऽस्ति निहतो दैवात्कदाचिद्दिवि ॥३७॥
गोमन्तेऽखिलराजकामितचमूसाह्येन हन्तुं जरा-
सन्धे रामजनार्दनौ पुनरिते तावेकवीरावुभौ ।

स्वीयं सैन्यवनं निजायुधशिखावल्या दहन्तौ भृशं
चैद्यो वा मगधाधिपः किमकरोद्युद्धापयानं विना।। ३३८।।
कृष्णात्प्राणसखादशेषजगतीनाथाज्जगन्मोहनात्
अन्यस्मिन्न नृपात्मजे सरति मे मर्त्ये कथञ्चिन्मनः ।
चैद्येनोपयमः परश्व इह निर्णीतो नृपाश्चागताः
सोत्साहास्सकलास्स्वसैन्यसहिताः कृष्णोऽपि बन्धुत्वतः ॥
किं कार्यं तु मयेप्सितार्थघटनं स्यान्मे कया वा दिशा ।
कृष्णो मय्यनुरक्तवांश्च वृतवानित्यप्युपाकर्णितम् ।
भावं मे नगरस्थिताय हरये किं द्योतये पत्रतो
दूतं प्रेष्य न चाथ मेऽस्ति समयस्तूष्णीमिहावस्थितौ।।४०।।
अन्तर्याम्ययमीश्वरः किल हरिस्सर्वेङ्गितज्ञो जग-
त्येकस्या युवतेर्न चेङ्गितमवैतीत्यज्ञतापादनम् ।
न स्यात्किं नु ततो विधेयविषये यस्येद्यथेष्टं स इ-
त्यूहो नापि वरो न साधयति सत्त्वर्थान्निरुद्योगिनाम्।।४१।।
साहं क्षत्रियकन्यका पतिवृतौ शास्त्रैस्स्वतन्त्रोदिता
भ्राता वापि पिता प्रसूरिह न मद्भावं त्वपृच्छन्मिथः ।
शिष्टक्षत्रियधर्ममात्मविहितं त्यक्त्वान्यथाचारिणं
निर्बन्धान्निजधर्महानमिह मेऽनर्थावहं स्यान्न किम् ।।४२।।
गान्धर्वोऽपि च राक्षसोऽपि मनुना क्षत्रस्य धर्म्यौ स्मृता
वुद्वाहाविह चापि राक्षसविधिश्शिष्टैः प्रशस्तस्स्मृतः ।
गान्धर्वेऽभिमतात्मभर्तृवरणं वध्वाः प्रधानं ततो
दानं संस्कृतिरग्रजेषु न वृतिर्दानं तु मुख्यं स्मृतम् ।।४३।।

प्राजापत्यविधिस्तु गौण इह च क्षत्रेषु कन्यामत-

ज्ञानं मुख्यमिहातिजग्मतुरमौ भ्राता पिता तन्मम ।

कन्यानीप्सितपूरुषाय बलतो दानं त्विहामुत्र च

श्रेयोभञ्जकमेव दातुरपि वा बध्वास्ततोऽहं यते ॥४४॥

कृष्णो मय्यनुरक्तवानतितरामित्यन्यतस्संश्रुतेः

नोदासीत स इत्युपेक्षणमपि स्यादत्र भाव्यं न मे ।

वाग्दानात्परपूरुषाय तु पुरा तातस्य रुक्मि स्थिरां

स्वां मत्तो न निवर्तयेदिति कथं मन्मानसावेद्यसौ ॥४५॥

आत्मानं तु समर्पयामि हृदयेशाय स्वयं लेखया

भावं स्वं सकलं विलिख्य सहसा कर्तव्यमेतन्मम ।

नोपेक्षासमयो ममेप्सितफलवाप्तिस्तु वश्या हरेः

दैवस्याखिलवेदिनोऽप्रतिहतामेयात्मशक्तेः प्रभोः ॥४६॥

कस्मै चित्पुरुषाय काञ्चन वधूं पित्रा प्रदत्तां गिरा

पाणिग्राहकृते वरेऽभ्युपगते साकं स्वबन्धुव्रजैः ।

तत्प्रत्यूहविधानमात्मसदृशं नैवेति चेन्मन्यते

मद्भावानवगाम्यसाववगते भावे तु नोपेक्षते ॥४७॥

कन्यानिष्टवराय बन्धुबलतः प्राप्ते विवाहोद्यमे

तत्प्रत्यूहविधिं स्वधर्ममवगत्यैवात्र वर्तेत सः ।

तस्माद्भावनिवेदनं समुचितं तूर्णं विधेयं च मे

नोपेक्षासमयः परश्व उदितोऽनिष्टो विवाहस्त्वकैः ॥४८॥

निश्चित्यैवमनन्यधीस्त्वरितमहत्सा रुक्मिणी लेखनी-

मादायालिखदात्मभावगमकं वाक्यव्रजं पत्रके ।

मुक्तादामसवर्णया स्फुटतमाकारोज्ज्वलश्रीजुषा
श्रेण्या वर्णततेः प्रियेक्षणकृषा स्वस्थारसेन स्वयम् ॥४९॥

वर्यांहं प्रणमामि भीष्मकसुता रुक्मिण्यभिख्या हरे
साष्टाङ्गं भवदंघ्रिपद्मयुगलं प्राणेश भक्त्या विभो ।
विज्ञाप्यं विनिवेदयामि भवते पत्र्यानयाऽऽवश्यकं
स्वाकर्ण्येदमधीश ते सुहृदयं साध्नोतु मत्कामितम् ॥५०॥

वीरोत्तंस तव श्रुतानि चरितान्याबाल्यमत्यद्भुता-
न्यद्यावव्यमरादिसर्वनिवहस्तुत्यानि लोकेश्वर ।
इन्द्रात्प्राप्तमुपेन्द्रधाम च गवेन्द्रत्वं च गोलोकतः
श्रीगोवर्धनधारणेन भवता गोरक्षिणात्यापदः ॥५१॥

कालीयाहिदमर्षभोग्रहयतच्चाणूरकंसादि-
संहाराद्यैर्मगधाधिपाभिभवनादष्टादशाजिष्वपि ।
गोमन्ताद्रिगतेऽन्तिमे गुरुरणे भ्रात्रेकसाह्येन य-
द्वीर्यं दर्शितमीश तेन भवता राजेन्द्रतेहार्जिता ॥५२॥

एतान्यल्पतराणि तेऽखिलजगत्साम्राज्यसिंहासना-
धीशस्याखिलशक्तिधाममहितस्यामेयवीर्यश्रियः ।
धामानि प्रियकेशिकंसहननादीनीभहन्तुर्हरेः
एणालम्भसदृंशि मागधजयो भाल्लूकतुल्यो हरे ॥५३॥

आवंश्रावमये मदीयहृदयं चित्रं चरित्रं चिरात्
गाढं लग्नमिदं त्वयीश भगवन् शृङ्गारभावैस्सदा ।
रूपं ते कमलाक्ष चित्रफलके दृष्टं जगन्मोहनं
कृष्णाऽऽकृष्य भवद्वशं व्यतनुतायस्कान्तवत्सूचिकाम् ॥५४॥

देहस्तातवशो वशं तु हृदयं प्राणाश्च वश्यास्तव
त्वद्रूपस्य वशंङ्गतानि करणान्यात्मा त्वदद्वैतताम् ।
प्राप्तः किं नु करोमि सर्वविवशा तातो वशो रुक्मिणः
रुक्मी तन्मगधेश्वरस्य हि वशस्त्वां द्वेष्टि नित्यं विभो॥५५॥

तस्येदं विषमं फलं परिणतं स्वप्नेऽपि चैद्येऽथ वाऽ-
न्यस्मिन्वा पुरुषे जगत्रितयगे भावो न वर्तेत मे ।
त्रिस्सत्येन वदामि सर्वकरणैस्त्वां कामये मत्पतिं
वश्यं मामकजीवितं तव विभो किं वा यथेष्टं कुरु ॥५६॥

गोरक्षार्थमिहाद्रिमुद्धृतवते हस्तेन बाल्येऽङ्घ्रिणा
पीनौ पातयतेऽर्जुनौ शकटमप्यद्धा महान्तं विभो ।
कालिन्द्यां विषदुर्विषह्यफणिनं नृत्येन वश्यं क्षणात्
आधात्रेऽमितशक्तये किमबला विज्ञापयाम्यात्मने ॥५७॥

बद्धान्तःपुरपञ्जरेऽस्मि सततं त्वां चिन्तयन्ती शुकी-
दोद्वाहे शिशुपालकेन सह निर्णीते तु पिता भृशम् ।
दृष्ट्वा राजकमाप्तमाहृतबलं वैवाहिकोत्साहव-
द्दीर्णं मे हृदयं त्वदागमनतो लग्नं पुनस्तृष्णया ॥५७॥

मद्भावानवबोधनं तु भवतस्तूष्णीं स्थितेस्साधकं
स्यादित्यात्मवितर्कतोऽखिलजगद्यन्तुः कृतं साहसम् ।
स्त्रीचापल्यमिदं क्षमस्व कृपया प्राणेश रक्षाशु मां
आर्तां तप्तहृदं प्रसार्य करुणापीयूषधारां तुरम् ॥५९॥

आबाल्यं सहजं तवापहरणं हैयङ्गवीनादिकेऽ-
प्यन्येषां निजवस्तुनोऽन्यहरणे प्राप्ते किमूपेक्षसे ।

इन्द्राणीपरिपूजनाय परिणीत्यङ्गाय देव्यालयं
प्रातश्श्वस्समुपैमि सैष समयस्त्वत्तेजसो दर्शने ॥६०॥
शिष्टक्षत्रियधर्ममत्र समुपादाय स्वधाम्नो बलात्
प्राणेशोद्धर मामनन्यशरणामौद्वाहिकानर्थतः ।
आत्मानं प्रदिशानि सर्वकरणैः प्राणैस्सह श्रीहरे
सर्वज्ञाय रसात्मने किमधिकैर्यद्रोचते तत्कुरु ॥६१॥
एतावत्तु विलिख्य वर्णरसतः पत्रे शुभे सान्ततः
स्वं नामाक्षरशो विलिख्य दयिता ते रुक्मिणीति न्यधात् ।
पत्रं बन्धपुटान्तरे तदलिखत्तस्योपरि श्रीजग-
त्साम्राज्यैकमहेश्वराय भगवत्कृष्णाय पत्रन्त्विति ॥६२॥
बद्ध्वा बन्धरसेन तन्निजगुरूत्तंसात्मजायादिशत्
भद्रं कृष्णमृते न देयमयि मे पत्रं परस्मै गुरो ।
इत्युक्त्वा वसु भूरि रत्नसहितं दत्वातितृप्तात्मने
भद्रं भद्रमिदं दिशेत्यभिदधत्येकाकिने श्रीगुरो ॥६३॥
तुष्टात्मा स तथा करोमि सुभगे मामाऽन्यथा चिन्तये-
त्युक्त्वादाय बहिःपुरोपवनगायादात्तदेकाकिने ।
कृष्णायात्मविधेयमन्तरुचितं कालं पुनर्ध्यायते
रुक्मिण्यां हृदयं निवेश्य गुरुराट्सूनुः प्रणम्यादरात् ॥६४॥
त्रिस्तत्पत्रमधीत्य सस्मितमुखः कृष्णस्तथा स्यादिति
ब्रूहीति प्रतिभाष्य तं द्विजसुतं सम्भाव्य मुद्रांकितम् ।
दत्वा स्वर्णमयांगुलीयकवरं रत्नोज्ज्वलं प्रैषिषत्
सोऽभ्यायात्प्रतिभाषितुं प्रमुदितः कृष्णस्य तां रुक्मिणीम् ॥

कृष्णो विस्मितहृत्ततस्स्वदयिताभावोचितव्यापृतेः
श्रृङ्गारं करुणं च वीरमुदितं हार्देन पुष्णन्भृशम् ।
तल्लेखागतवाक्यशब्दविततेर्भाष्यं वितन्वन्धिया
तत्सौन्दर्यविभूतिवर्णनपरो निन्ये कथञ्चिन्निशाम् ॥६६॥

सेयं मद्दयिता मृगीव मृगयुव्रातातिभीता निजा-
निष्टोद्वाहसमागतावनिविभूपात्तातिसंरम्भतः ।
भीतात्मा मदुपेक्षणे बहुमनर्थार्तिं विचिन्त्यातुरा
भावं चात्महृतौ निवेद्य समयं पत्रं लिलेखोचितम् ॥६७॥

मत्प्राणामृतकुण्डिकेयमबला भावानभिज्ञा मम
स्वानिष्टासित आत्मरक्षणकृते सम्प्रार्थयन्ती स्वयम् ।
पत्रं प्रैषिषदार्तरक्षणमिदं यन्मे सदापि व्रतं
तत्रापि स्ववधूनिमित्तकमुदासे वा महो दर्शये ॥६८॥

रुक्मिण्या मम सङ्गतिं तु बहुधा वृद्धाय चाबोधयं
गोमन्तादिरणेषु मामकमहो दृष्टं न किं रुक्मिणा ।
व्यामोहो मगधाधिपेऽस्य विजिते द्वेषोऽपि मय्युत्कटः
प्राप्नोतु प्रतिकूलधीफलमिह भ्राता पुनर्मागधः ॥६९॥

चञ्चच्चक्रखरारजोग्रदहनज्वालापतङ्गान्नृपान्
कौमोदक्यभिघातचूर्णिततनूनेतान्न तन्वे किमु ।
भ्राम्यच्छार्ङ्गधनुर्विनिस्सरदिषुव्राताग्रकृत्ताङ्गकान्
आजौ नन्दकखड्गकृत्तशिरसश्चार्तस्त्रिया रक्षणे ॥७०॥

चैद्यः कोन्वसुवल्लभां मम रमामुद्वोढुमन्याश्रयात्
स्वानिष्टां नृपकन्यकां बलमदादज्ञातभावां वधूम् ।

तद्भ्रातुस्स्ववशस्य चाग्रहबलाद्धिकृत्य धर्मं निजं
सिंहीमेण इवात्मसाद्वितनुयात्किं वा हरौ कर्षति ॥७१॥
अन्तस्स्फूर्तमहो त्रिलोकरमणीसौन्दर्यसारान्वितं
तद्रूपं सुरसुन्दरीसुभगतामानापकर्षक्षमम् ।
लावण्यामृतवीचिकान्तरमिषत्सौदामनीसुप्रभा-
सोदर्याङ्गविभासि कर्षति मनो मत्कं महामोहनम् ॥७२॥
सा साक्षादनवेक्षितापि हृदये प्राणप्रिया रुक्मिणी
लक्ष्मीरेव विभाति कर्षति निजैरङ्गैस्सदा मानसम् ।
मच्चित्तातितरां शुकीव तपति स्वं वल्लभं पञ्जरे
बद्धाऽनिष्टबलात्कृतिव्यसनिता तामुद्धरेयं बलात् ॥७३॥
इत्यादीनि विचिन्तयन्प्रतिकलं श्रीरुक्मिणीमात्मनि
ध्यायन्नाङ्गिकसौभगं पृथगनुध्यायंश्च संवर्णयन् ।
रुक्म्यादिप्रतिकूलवर्तनकृतोद्वेगः कदाचिद्रुषा
क्रान्तस्तत्प्रतिकारसम्भ्रमवशो निन्ये निशां तां हरिः ॥
सा चाचार्यसुतं प्रसन्नवदनं प्राप्तं तु पप्रच्छ तं
दृष्टः किंनु मिथो हरिः कनु कृतं कार्यं यथोक्तं किमु ।
दत्तं पत्रमपीक्षितं किमथ किंवोवाच किं तन्मुखं
कीदृग्भाति वदाहतोऽसि हरिणा जातं यथावद्गुरो ॥७५॥
तत्प्रश्नावलिमुत्सुकां गुरुसुतश्श्रुत्वा बभाषे भगि-
न्येतत्ते लषितं सुसिद्धमखिलं कृष्णस्सुदृष्टोऽश्रमम् ।
बाह्योद्यानगतश्शुभैस्सुशकुनैरेकाक्यसौ चिन्तयन्
कार्यं किंचन पत्रिका प्रणिहिता पाणौ तदीये तव ॥७६॥

तां त्रिस्सोऽपठदादरात्स्मितमुखः प्रोचे तथा स्यादिति
ब्रूहीति प्रमदेन फुल्लनयनो नामाक्षरैरंकितम् ।
सौवर्णं निजमंगुलीयकमिदं रत्नोज्ज्वलं मेऽदिशत्
पश्येति प्रणिगद्य तत्करपुटे न्यास्थत्प्रमोदान्वितः ॥७७॥

विद्युत्पुञ्जविलासिशक्रधनुरुद्द्योताभिभाविप्रभां
सौवर्णांगुलिमुद्रिकां तनुमणिश्रेणीकृताख्याक्षराम् ।
आत्मप्राणपतेरवेक्ष्य परितः कृष्णस्य सा रुक्मिणी
हार्दोद्रेकवती चुचुम्ब नयनद्वन्द्वेन भावोर्जिता ॥७८॥

पश्चात्तं बहुमानतस्सह पुनर्दत्वांगुलेर्मुद्रिकां
सन्तोष्यादरभाषणैस्स्ववसतिं सा प्राहिणोद्रुक्मिणी ।
सिद्धं मे लषितं त्वदीयकरुणासारात्कृतज्ञास्मि ते
गच्छैतत्कृतमत्र मा वद गुरो कस्मै च नेत्यादिभिः ॥७९॥

साथ श्रीगुरुसूनुनिर्गमनतस्स्वान्ते स्मरन्ती हरिं
बाह्योद्यानगतो हरिर्हृदि स किं न्वेकस्स्वयं चिन्तयेत् ।
उद्वाहेक्षणकौतुकागतविभोः किं राजकीयं त्विह
स्यादेकान्तविमर्शनीयविषयं स्वावश्यकं प्रेयसः ॥८०॥

मत्पत्रे तु समर्पिते गुरुसुतेनाशु महो दर्शनं
त्रिःपाठस्स्मितवक्त्रता प्रतिवचस्तूर्णं तथा स्यादिति ।
एतैर्वल्लभचिन्तनं रहसि तन्मन्ये मदीयं नचे-
देतेन स्युररं बहूक्तिरपि स्यात्कालचिन्ताहृतौ ॥८१॥

पत्रप्रेषणमेतदद्य तु मम प्राणेश्वरायोचितं
कालस्मारकमाशयावगमकं संशीतिविच्छेदकम् ।

जातं मय्यनुरक्तमेव हृदयं क्षात्रं तु धर्मं परि-
त्रायेत ध्रुवमत्र चैद्यवशगा न स्यां बलात्कारतः ॥८२॥

तद्रूपं पुरुषान्तरे क्व नु जगत्त्रय्यां जगन्मोहनं
माया साखिललोकमोहनकरी छायात्मना संस्थिता ।
यद्देहे नवनीलनीरजनिभा संछादयित्री महा-
तेजःपुञ्जमखण्डशक्तिकलितं स्वान्तर्गतं वैष्णवम् ॥८३॥

तद्वीर्यं क्व बलं क्व धैर्यमचलं शौर्यं क्व गाम्भीर्यम-
प्यौदार्यं क्व महामहोऽप्रतिहता शक्तिः क्व वा साहसम् ।
उत्साहः क्व नु मन्त्रशक्तिरुचिता कार्येषु वैज्ञानिकी
शक्तिर्वा सुगुणावलिः क्व शुभकृत्सर्वन्त्वपूर्वं हरेः ॥८४॥

एवं सा निजवल्लभस्य सुगुणानाबाल्यमेकैकशो-
ध्यायन्ती हृदयेऽङ्गसौभगमनन्याद्दक्पृथग्भूमशः ।
आध्यायन्त्यसकृन्मनोरथसरिद्वीचीचलद्दोलिका-
हंसीभूतमना अवैक्षत निशां यातामुषश्चागतम् ॥८५॥

कल्ये माङ्गलिकक्रिया विदधति प्रेम्णाऽऽप्तनारीव्रजे
ध्यायन्ती हरिमेव चेतसि बहिर्निर्वर्तयन्ती क्रियाः ।
चेटीनामपि दुर्गमाशयवती तादात्म्यमाप्ता क्रमात्
इन्द्राणीपरिपूजनाय तु ययौ देव्यालयं रुक्मिणी ॥८६॥

सौवर्णीं शिबिकामधिश्रितवती रत्नोज्वलामावृतां
कन्यारत्नगणैर्विभूषिततनुर्भूषाविशेषैस्समैः ।
कौशेयं वसनं सितं धृतवती प्रद्योतयन्ती दिशो
लावण्येन निजेन भूषणरुचा चैन्द्रीपदं सा ययौ ॥८७॥

सा देवीसदनोपकण्ठनिहितस्वान्दोलिकाभ्यन्तरात्
चेटीहस्तकृतावलम्बनवती मन्दं ततोऽवातरत् ।
गच्छन्ती शनकैः पुरोहितपुरोभागार्चनाभाजनैः
सौवर्णैर्निजपार्श्वगामिमहिलाहस्तोद्धृतैस्सा ययौ ॥८८॥
दृष्ट्वा शारदवारिदाञ्चिततडिल्लेखां स्फुरन्तीं यथा
शक्रेष्वासनचित्रदीप्तिकलितां तां रुक्मिणीं श्रीहरिः ।
कौशेयोपरिसंस्फुरन्मणिलसत्सौवर्णभूषाप्रभा-
सम्मिश्राङ्गरुचिप्रकाशितदिशं कामातुरोऽचिन्तयत् ॥८९॥
सैषा गच्छति वासवीं महयितुं प्राणप्रिया मे रमा
तद्वक्रालकभृङ्गराजिकलितं सौवर्णपद्मं मुखम् ।
ते नेत्रे नवलीलनीरजनिभे पुण्ड्रेक्षुचापौ भ्रुवौ
वक्षोजौ जगदेकमोहनपयःपीयूषपूर्णौ घटौ ॥९०॥
बाहू हेममृणालकाण्डसदृशौ पाण्यम्बुजोद्भासिनौ
मध्यं त्वस्ति नवेति संशयपदं श्रोणी विशाले च ते ।
ऊरू तौ करिणीकराविव गुरू पादौ च फुल्लाम्बुजे
हंसी वैति च मानसी मृदुगतिर्देव्यालयं श्रीरियम् ॥९१॥
एवं श्रीहरिरन्तरात्मनि परं संवर्णयन् सौभगं
प्रत्यङ्गं शिबिरान्तिके त्वधिवसन् दृष्ट्वातिकामातुरः ।
पश्यं स्तत्प्रतिनिर्गमं सदनतो रामेण कुर्वन्बहिः
गोष्ठीः काश्चन तद्विवाहविषया ऊचे जिहीर्षुस्ततः ॥९२॥
रामैषा किल वल्लभा मम रमा रुक्मिण्यभिख्याधुना
तत्तत्सर्वविशिष्टलक्षणगणैस्साक्षान्मनः कर्षति ।

इन्द्राणीमभिपूज्य निर्गतवतीं भ्रातर्जिहीर्षाम्यहं
भारं न्यस्य भवत्यरिप्रमथने वीरेषु सर्वेषु नः ॥९३॥
नैनामर्हति चैद्य एष हरिणः प्राणप्रियां मे रमां
वृद्धायाकथयं किलाखिलकथामस्त्यास्स सूनोर्वशः ।
मुग्धस्त्वेवममन्यत प्रतिकृतिस्सैषा नचान्याधुना
रामात्रानुमतिं दिशेति स तथास्त्वित्याबभाषे पुनः ॥९४॥
साचाभ्यर्च्य यथावदिन्द्रगृहिणीमर्होपचारैः क्रमाद्
भक्त्या तामवृणोत्पतिं दिश ममोपेन्द्रं यथा त्वं शिवे ।
इन्द्रं प्राप्तवती त्रिविष्टपविभुं सर्वेश्वरं श्रीहरिं
कृष्णं सर्वजगद्विमोहिवपुषं सर्वज्ञतेजोनिधिम् ॥९५॥
चैद्येनोपयमस्त्रिभिश्च करणैरिन्द्राणि रोचेत नो
त्यक्त्वा श्रीहरिमत्र वापि भुवनेऽन्यत्रापि वान्यः पुमान् ।
भर्ता मास्तु मम प्रसीद कृपया कारुण्यपाथोनिधे
मातर्देवि नमोऽस्तु तेऽभिलषितं कृष्णं पतिं देहि मे॥९६॥
सम्प्रार्थ्यैवमनेकधा भगवतीं श्रीरुक्मिणी संनता
देवीसद्मबहिर्गताऽलसगतिः प्रद्योतयन्ती दिशः ।
लावण्येन निजेन चाङ्गललितैस्सम्मोहयन्ती जग-
न्मायेव प्रतिबिम्बिता नरवपुष्यायाति रथ्यान्तरम् ९७॥
तां दृष्ट्वा शिबिकाधिरोहणसमुद्योगां स्फुरच्चञ्चला-
रोचिस्सञ्चयलोललोचनहरस्वाङ्गप्रभाभासुराम् ।
मूर्तां शक्तिमिव त्रिलोकजननीं स्त्रीपुंससम्मोहिनीं
आप्लुत्याहरदच्युतोऽब्धिस्वपामिन्द्रो यथाऽऽमन्त्रितः ॥९८॥

बाहुभ्यां परिरभ्य तां स्रजमिवोद्धृत्यातिवेगाद्रथे

संस्थाप्याहवभारमत्र सकलं विन्यस्य रामादिषु ।

सञ्चोद्याश्वगणं स्वदारुकमुखेनात्यन्तवेगाद्रथं

स्वीयां द्वारवतीं पुरीमभिययौ सन्धावयन् श्रीहरिः ॥९९॥

दृष्ट्वा विस्मितचेतसो नृपतयः क्रोधाकुलास्स्वैर्बलैः

रामं यादववीरवर्यनिवहं रुद्ध्वात्वहन्नायुधैः ।

उत्पाट्याथ हली महातरुवरं तेनारिसेनां बलात्

निघ्नन्कल्पकरुद्रवद्रणमुखे रामश्चचाराद्भुतम् ॥१००॥

दन्तास्यश्शिशुपालकोऽपि मगधाधीशोऽङ्गवङ्गादि-

सद्राजव्रातयुताः प्रचण्डरणभूपाण्डित्यशौण्डा रुषा ।

तत्तत्सात्यकिमुख्ययादवमहावीरैरभीयुर्बलैः

रामो वङ्गविभुं गुरुत्वतरुणा सेभं जघान क्रुधा ॥१०१॥

पश्चात्तद्रथमारुरोह सहसा गृह्णन्धनुः कैशिकान्

वेगी तीक्ष्णशरव्रजैर्निहतवान्रामो रणे प्रज्वलन् ।

एकैकेन निपातनेन शतशो निघ्नन्बलं मागधं

विव्याधाष्टभिराशुगैर्मगधभूपालं ध्वजं चाच्छिनत् ॥१०२॥

जघ्नुस्ते विविधैश्शितायुधवरैस्तृष्णां विसृज्यासुषु

क्षेप्तारस्स्वजयाग्रहेण निशिता हेतीर्गदाद्या मिथः ।

तद्दैवासुरमप्यतीत्यमथनं जातं महादारुणं

रामोदग्रमहोग्निना तु बलिना बार्हद्रथोऽन्ते द्रुतः॥१०३॥

रुक्मिण्याहरणं निशम्य तु रुषा रुक्मी प्रतिज्ञातवान्

नाहत्वा समराङ्गणे हरिमनानीयापि तां रुक्मिणीम् ।

एतत्कुण्डिनपत्तनं पुनरहं भूपाः प्रवेक्ष्यामि भोः
इत्युक्त्वा महताऽनुदुद्रुव इलानाथैर्बलेनात्मनः ॥१०४॥
रुक्मी दूरमतीत्य वर्त्म जवतो रेवातटे दृष्टवान्
श्रीकृष्णं रथगं ज्वलन्नतिरुषा तिष्ठन्तु सर्वे नृपाः ।
युद्धं द्वैरथमस्तु मेऽस्य भगिनीचौरं स्वयं हन्म्यहं
कृष्णं पश्यत मत्तमित्यभिययावुक्त्वैणवत्तं हरिम् ॥१०५॥
तीक्ष्णैराशुगतिर्जघान स हरिं बाणैश्चतुष्षष्टिभिः
सप्तत्या तु शरैर्जघान निशितैश्छित्वा ध्वजं सारथिम् ।
हत्वा रुक्मिण माशु कृष्ण उदितात्यन्तव्यथं चाकरोत्
आपन्नं परिवीक्ष्य तं नृपतयस्त्वावव्रुरीशं हरिम् ॥१०६॥
श्रीकृष्णं दशभिश्शरैर्निहतवान् शूरोंशुमान्पञ्चभिः
तीक्ष्णैराशुगतिश्श्रुतर्वनृपतिस्तं वैणुदारिर्नृपः ।
बाणैस्सप्तभिरच्युतोंशुमदुरस्येकेषुणाहंस्ततः
तत्र स्यन्दन एव सोभिपतितस्तीक्ष्णेषुघातार्दितः ॥१०७॥
हत्वाश्वांश्चतुरश्चतुर्भिरिषुभिस्तं च श्रुतर्वाभिधं
भूपं पञ्चशरैर्जघान स हरिस्सोऽप्यभ्यपतद्ध्वजम् ।
आलम्ब्य स्वरथे गुरुश्रमहतस्तद्वैणुदारेर्ध्वजं
छित्वा दक्षिणबाहुमच्छिनदसावप्याप मूर्छां रथे ॥१०८॥
पश्चात्ते क्रथकैशिकप्रभृतयो भूपा अतिक्रोधतः
मुञ्चन्तश्शरवर्षमच्युतमथावव्रुस्समन्ताज्जवात् ।
कृष्णस्स्वैर्निशितैश्शिलीमुखगणैश्छिन्दंस्तदीयानिषून्
तान्व्यद्रावयदात्ममार्गणहतेः स्थातुं न तेऽशक्नुवन् ॥१०९॥

आत्मानीकपलायनं हरिशराघतैर्निरीक्ष्याऽसहं
रुक्मी रुष्टहृदच्युतोरसि जवानोग्रैश्शरैः पञ्चभिः ।
यन्तारं त्रिभिरेकतो ध्वजमपि क्रुद्धोऽथ कृष्णः पुनः
विध्द्वा तीव्रशरैस्तमच्छिनदपीष्वसं तुरं लाघवात् ॥११०॥

धन्वान्यत्परिगृह्य सोऽस्त्रनिवहं रुक्मी प्रयुञ्जन्रणे
पाण्डित्यं स्वमदर्शयत्क्षणमथ प्रत्यस्त्रयोग्यैर्हरिः ।
तान्यस्त्राणि निवार्य तद्धनुरथ च्छित्त्वा रथं च त्रिभिः
बाणैस्तं विरथं विचापमकरोत्सोऽसिं च चर्मादढे ॥१११॥

ताभ्यामात्मजिघांसयोत्पतनक्रुद्धुक्मित्वरां वीक्ष्य त-
त्खडगं हस्तगतं द्विधाच्छिनदथात्युग्रैस्त्रिभिर्मार्गणैः ।
वक्षस्यस्य दृढं जघान स हरिस्तेनाभिघातेन सः
क्षोण्यामाशु पपात वृक्षइव संक्षुल्थो मुमूर्छापि च ॥११२॥

पश्चादग्निशिखोपमैश्शरगणै राज्ञो जघानाखिलान्
कृष्णो रुद्र इवोग्रमूर्तिरसुभीभारेण ते दुद्रुवुः ।
क्षोण्यां कृष्णशरव्यथातिशयतो घूर्णन्तमात्माग्रजं
दृष्ट्वाऽभिक्षत कृष्णपादपतिता तत्प्राणदानं प्रिया ॥११३॥

दत्वाऽस्यै सहजास्वभीतिमथ तामाश्लिष्य चाश्वास्य च
श्रीमद्द्वारवतीं पुरीं स तु ययौ कृष्णो विजिष्णुर्द्विषाम् ।
जित्वा यादवपुङ्गवा अपि जरासन्धं स सामन्तकं
सर्वे लाङ्गलिसाह्वतः प्रमुदिताः प्रापुः पुरीं कुण्डिनात् ॥

दृष्ट्वा कृष्णविनिर्गमं भयमितोऽपोह्य श्रुतर्वारथे
स्वे संस्थाप्य च रुक्मिणं तमनयद्वैदर्भमात्तव्यथम् ।
मत्तो मान्यपि रुक्म्यथात्मनगरं रक्षन्प्रतिज्ञां निजां
नैव प्राविशदत्र चैव वसतिं चक्रे विदर्भावनौ ॥११५॥

निर्मायात्र पुरन्तु भोजकटमित्याख्यं नवं रुक्म्यसौ
देशं दक्षिणमन्वशान्निजभुजोद्दण्डप्रतापान्वितः ।
वृद्धो भीष्मकभूपतिस्स्वनगरे श्रीकुण्डिने संवसन्
देशं स्वं स जुगोप धर्मनिरतस्संश्चिन्तयन् श्रीहरिम् ॥

रामे यादववीरवर्यनिवहैः प्रत्यागते द्वारकां
जित्वा भूरिनृपालसैन्यसहितं बार्हद्रथं मोदतः ।
रुक्मिण्याः करमग्रहीत्त्रिजगतीसाम्राज्यलक्ष्म्या इव
श्रीकृष्णो विधिवद्विवाहविभवैर्लग्ने शुभे सर्वशः ॥११७॥

तत्पाणिग्रहणोत्सवोऽखिलजगत्कल्याणसन्धायकः
श्रीमद्द्वारवतीपुरे नरवराद्दष्टैर्महावैभवैः ।
इन्द्रादिप्रहितोपहारनिवहैर्दिव्यैर्मणीभूषणैः
वासोभिश्च सुगन्धवस्तुनिवहैर्नानाविधैश्शोभनैः ॥११८॥

रथ्याः कुंकुमगन्धवारिभिरलं सिक्तास्सुगन्धव्रज-
क्षोदौघैस्सुरभीकृता अतितरां क्षिप्तैस्समन्तात्पुनः ।
दीव्यत्स्तम्भसहस्रनिर्मितविचित्रानेकभूषाञ्चितो-
च्चोद्योतितकायमाननिवहैस्सम्भूषितास्सर्वतः ॥११९॥

पार्श्वद्वन्द्वगसौधराजिविलसद्भूमीगतस्तम्भस-
म्बन्धानेकविचित्रतोरणपताकालंकृताभ्यन्तराः ।
श्रेणीबद्धमणिप्रदीपकिरणव्यामिश्रमुक्तामणी-
दामांशुप्रकरप्रभासुरवितानालंकृतात्मान्तराः ॥१२०॥

नानामण्डनमण्डिताः पुरगृहास्सर्वे विचित्रप्रभाः
स्त्रीपुंसौ नववस्त्रभूषणगणैस्सम्भूषितावुत्सुकौ ।
सर्वे पौरगणा यथास्वतनयोद्वाहात्तसंरम्भस-
म्मोदोद्रेचितचेतसो निजकृतिष्वासंस्तथोत्साहिनः॥१२१॥

इन्द्रो दिव्यमहामणीमयमहाकल्याणपीठं निजैः
दूतैर्निर्मितमात्मशिल्पिवरतस्स प्राहिणोद्भास्वरम् ।
तत्कल्याणमहागृहोन्नतमहावेद्यां सुवर्णेष्टका-
बद्धायां बहुरत्नपुञ्जकलिताकल्पोज्ज्वलायां भृशम् ॥१२२॥

सौवर्णोर्ध्ववितानलम्ब्युरुमणीमालाप्रदीपप्रभा-
रज्यन्मौक्तिकदामदिव्यकुसुमस्रक्केतुमालादिभिः ।
रत्नस्तम्भगणाढ्यतोरणगणान्तर्लम्बिनानामणी-
गुच्छैर्हैममहाम्बुजादिभिरलं सम्भूषितायां न्यधुः ॥१२३॥

इन्द्राद्या दिगधीश्वरा उपययुश्श्रीरुक्मिणीकृष्णयोः
पाणिग्राहमहामहाय कुतुकोद्रेकाच्छिवौ चागतौ ।
सप्तर्षिप्रवराश्च नारदमुखा भूलोकगान्यर्षयः
राजानोऽपि महोपदाभिरमितोत्साहा भृशम्भूषिताः॥१२४॥

श्रीमद्द्वारवतीपुरीगतजनास्सर्वेऽपि सम्भूषिताः
क्षौमै रत्नसुवर्णभूषणगणैर्गन्धस्रजां सञ्चयैः ।
हस्तन्यस्तसुवर्णभाजनलसन्मङ्गल्यवस्तुव्रजाः
कन्यावृद्धवधूगणाश्च परितस्तस्थुर्महामण्डपे ॥१२५॥

देवेन्द्रेण समर्पिते मणिमये कल्याणपीठे ततः
ब्रह्मावीविशदीश्वरानुमतितः कृष्णं च तां रुक्मिणीम् ।
लोकक्षेमकरोऽखिलाभ्युदयकृत्प्राप्तो मुहूर्तश्शुभः
गर्गोद्वाहविधिं प्रवर्तय तुरं त्वित्यूचिवांस्तं मुनिम् ॥१२६॥

पश्चाद्गर्गमुनिस्ससम्भ्रमयुतः पाणिग्रहप्रक्रियां
प्रारेभे गणनाथपूजनमुखां श्रीरुक्मिणीकृष्णयोः ।
तूर्यैरुच्चतरं नदत्सु परितो गायत्सु गातृष्वलं
नृत्यन्तीषु घनाङ्गनासु मुनिषु प्रव्याहरत्सु श्रुतीः ॥१२७॥

पूर्वाङ्गं सकलं विधाप्य विधिवत्पाणिं ततोऽग्राहयत्
रुक्मिण्या हरिपाणिना स मनुभिस्सन्धार्य दिव्यांशुके ।
पश्चाज्जीरकमिश्रसद्गुडकृतक्षोदेन मौहूर्तिकं
तन्त्रं ब्रह्मनिदेशतो व्यरचयत्ताभ्यां पुरोधा मुनिः ॥१२८॥

सूत्रं माङ्गलिकं सुवर्णविहितं सम्बद्धरत्नावलि-
स्फूर्तं तच्छिवधातृमुख्यकरसंस्पर्शानुमत्या पुनः ।
पार्श्वस्थादिसुमङ्गलीगणगलाघानैस्सुमाङ्गल्यदं
रुक्मिण्यास्सुगले न्यबन्धयदसौ कृष्णेन मन्त्रैर्मुनिः ॥१२९॥

दीव्यन्मौक्तिकदिव्यपुष्पघटितश्वेताक्षतारोपणे
श्रृङ्गारैकरसामृतस्रवदपाङ्गालिप्रसारा मिथः ।
ते मन्दस्मितचन्द्रिकासुमिलिताभावोर्मिलीलाभृतोऽ-
न्योन्यप्रेमभरप्रशंसिन इमेऽव्यासुस्तयोर्नस्सदा ॥१३०॥

अग्निं त्रिःपरिणाय्य सप्तपदिकां निर्वर्त्य याथातथं
तन्त्रं शिष्टमसौ समाप्य सकलं श्रीरुक्मिणीकृष्णयोः ।
ब्रह्मर्षिप्रवराशिषश्श्रुतिकृतास्संवाचयन्नक्षतान्
तेभ्योऽदान्महनीयसंसदि महात्मभ्योऽखिलेभ्यो मुनिः ॥

श्रीकृष्णः करयुग्मतोऽतिविनयी क्षामोत्तरीयाञ्चले
धृत्वोपाविशदासने मणिमये श्रीरुक्मिणीं पार्श्वगाम् ।
संवेश्यार्यमहाशिषस्स्वभिलषन्मन्त्रोदिता भद्रदाः
सत्सन्तानमहर्धिसर्वमहसां सन्धायिकास्सन्ततम् ॥१३२॥

ईशब्रह्ममुखामरव्रजमहर्षिव्रातसद्ब्राह्मणा-
म्नायोक्तिव्रजमन्त्रितास्सकलसत्क्षेमङ्करास्तेऽक्षताः ।
पार्श्वत्यादिसुराङ्गनाजरठसन्मर्त्याङ्गनाशीवचो-
व्रातैश्चाप्यभिमन्त्रिता हरियुगन्यस्तास्सदा पान्तु नः ॥

आशीरक्षतपुञ्जमंशुकगतं गर्गो गृहीत्वा पुनः
ईशाशीर्वचनैर्वधूवरशिरोयुग्मे पुरोधा न्यधात् ।
रुक्मिण्यासह कृष्ण ईशमिथुनायाष्टाङ्गयुक्तां नतिं
कृत्वा स्वार्च्यगणं ननाम सकलं पूज्य क्रमान्मोदतः ॥

उद्वाहोत्सवहेतवेऽभ्युपगतान् सर्वान्यथार्हं यथा
वस्त्रैराभरणैर्महार्घमणिमुक्ताद्यैस्सुवर्णव्रजैः ।
रस्यैर्भक्ष्यगणान्वितैस्सुमधुरैर्मृष्टान्नपानादिभिः
कृष्णोऽतर्पयदीश्वरोऽत्र जगतां तत्कः कविर्वर्णयेत् ॥१३५॥

पश्चाच्छ्रीशिवदम्पतिप्रभृतयस्सर्वे स्वलोकान्ययुः
राजानोऽपि निजान्ययुर्जनपदानात्मीयसैन्यैस्सह ।
सर्वे चर्षिवरा ययुर्निजपदान्यानन्दपूर्णाः परं
रुक्मिण्यासह कृष्ण आत्मभवने गार्ह्यं सुखं त्वन्वभूत् ॥

तस्यां कृष्ण उपात्तदिव्यमहसश्श्रीचारुदेष्णादिकान्
पुत्रान्प्राप दशात्मवीर्यमहितान् श्रीचारुमत्याह्वयाम् ।
एकां सर्वगुणोत्तरां सुतनयामप्याप कुल्यास्ततः
कालिन्दीप्रभृतीश्च पट्टमहिषीरष्टोपयेमे सतीः ॥१३७॥

सौन्दर्येण कुलेन शीलमुखतो गुण्यं ततष्षोडश-
स्त्रीसाहस्रमुदूढवानपि हरिस्तस्मिन् सहस्रात्मकान् ।
लेभे सत्तनयान्महारथमहायज्वाढ्यधर्मात्मनः
वीर्यौदार्यमहामहःप्रभृतिभिर्गण्यैर्गुणैरुत्तरान् ॥१३८॥

दोर्दण्डोद्दण्डवीर्यादखिलरिपुगणं भण्डनेषु प्रचण्डः
जित्वा भ्रातृद्वितीयो वृतजितविततस्त्रीसहस्रात्तपाणिः ।
तज्जायाप्तप्रजालिस्त्रिभुवनमहितद्वारकाभद्रवासी
श्रीकृष्णो लोकगोप्ता जयति हलियुतो भक्तलोकेष्टदायी ॥

धर्मोद्धृत्यै जगत्यां कुमतिरिपुगणोन्मूलने चावतीर्णः
प्रद्युम्नाद्यात्मजन्मोर्जितललिततिप्रेक्षणानन्दितात्मा ।
श्रीकृष्णो धर्मरक्षानियतनिजगतिं हार्दविद्विड्विजिष्णुं
श्रीकृष्णं स्वीकृतात्मप्रियसुतललितानन्दिनं पात्वजस्रम् ॥

जित्वा वैवस्वतं द्राङ्मृतमपि तनयं जीवयित्वा यथावत्
स्वाचार्यायादिशद्यस्स्वजितमपि ददावुग्रसेनाय राज्यम् ।
रुक्मिण्याऽभ्यर्थितोऽदाद्पिच सततविद्वेषिणे रुक्मिणेऽसून्
स श्रीकृष्णः कृपालुर्निजमहिमविदे किं न दद्यादभीष्टम् ॥

जयतु जयतु कृष्णो वृष्णिवंशप्रदीपो
बलवदरिविजेता भूरिघोराजिवर्गे ।
जयतु जयतु रामः कृष्णसाह्यप्रदाता
सकलकृतिषु लोकातीतधामाभिरामः ॥१४२॥

आत्रेयान्वयसिन्धुकौस्तुभसुधीलक्ष्मीनृसिंहात्मजो
यश्श्रीपुल्यउमामहेश्वरकृती फण्यम्बिकागर्भजः ।
तद्विद्वत्कविसार्वभौमरचिते वाणीकृपाढ्ये महा-
काव्ये कृष्णजये त्रयोदश इतस्सर्गस्समाप्तिं शुभः ॥१४३॥

विद्यावाचस्पतिश्श्रीविबुधकविमणिः केसरी शाब्दिकेषु
धर्मोपन्यासजालेऽप्यभिनवबुधराड्यो महाध्यापकश्च ।
आन्ध्रो धर्माभिधाता विबुधकविषु यस्सार्वभौमो बुधेन्द्रैः
आख्यातस्संसदन्तःकुलपतिकविरत्नादिशब्दैश्च विद्वान् ॥

श्रीमद्धर्मव्यवस्थामुकुरकुलिशहारादिधर्मप्रबन्धैः
काव्यैश्श्रीकंससंहारकशिवनुतिदुर्गामहानुग्रहाद्यैः ।
अश्रान्ताम्नायधर्मप्रवचनविधिभिश्शिष्यविद्योपदेशैः
ख्यातोऽयं वीरकृष्णप्रणिहितविजयं काव्यमेतद्ब्बन्ध ॥

अठ्ठ्यद्रीभावनिमिते शालिवाहशके बुधाः ।
नान्दनाब्दे नन्दनाय व्यधाद्धः काव्यनन्दनम् ॥१४६॥

इति श्रीमत्सप्तगोदावरान्तर्गत श्रीकोनसीममण्डलस्थित श्रीकौशिकीनदी-
तीरविराजमान श्रीमुङ्गण्डापराभिधान श्रीमुनिखण्डमहाग्रहाराभिजना-
न्ध्रवरवेगिनाडीकुलावतंस'श्रीमदभिनवपण्डितराज,विद्यावाचस्पति,
विद्वत्कविरत्न, कविरत्न, कुलपति, महोपाध्याय, वैयाकरण-
केसरि,धर्मोपन्यासकेसरि,धर्मस्थाप'केत्यादिविविधबिरुद्-
विभूषितविविधतन्त्रप्रबन्धनिर्माणचातुरीधुरीणश्रीम-
त्पुल्योपनाकोमामहेश्वरशास्त्रि :विद्वत्कवि-
सार्वभौमविरचिते श्रीवीरकृष्णविजय-
महाकाव्येश्रीरुक्मिणीकल्याणादिवर्णनं
नाम त्रयोदशस्सर्गः श्रीकृष्णपर-
मेश्वरार्पितो विजतां तमाम्
सम्पूर्णं चेदं महाकाव्यम्
श्रीमहावाण्यै नमः ।



# पाठ्याऽपाठ्यनिरूपकपङ्क्तिका ।

| पत्रं | पंक्तिः | अपाठ्यम् | पाठ्यम् |
|---|---|---|---|
| १ | ७ | वाक्या | काव्या |
| ६ | १ | निवेदिक | निवेदक |
| वंशप्रशंसायाम्— | | | |
| २ | २ | शस्त्र्यपरः | शास्त्र्यपरः |
| ४ | ७ | रूपतां | रूपां |
| ५ | १० | स्मार्नाणि | स्मार्तानि |
| ६ | १० | चोदनया | चोदनाया |
| ६ | १२ | समामार्चिंचं | समार्चिंचं |
| ६ | १९ | हरेण | हारेण |
| ७ | ४ | चान्यथा | चान्यदा |
| ग्रन्थे— | | | |
| ३ | १ | तद्दारिद्र्यमुचन्ति | दारिद्र्यन्तु वदन्ति |
| ४ | १५ | फलांमुचन्ति | फलां वदन्ति |
| ५ | ६ | भिदा | भिदा |
| ७ | १२ | दैवकी | दैविकी |
| ,, | १५ | मुचन्ति | विदोऽत्र |
| ,, | १६ | चयन्त्यात्मभिः | चयन्त्वात्मभिः |
| ११ | १८ | ध्यष्ठिते | ध्यधिष्ठिते |
| १२ | ६ | कांक्ष्ये | कांक्षे |
| १९ | १३ | कृतकस्य | कृतकस्स |
| २१ | १ | गिरिस्स | गिरिस्स |

| पत्रं | पंक्तिः | अपाठ्यम् | पाठ्यम् |
|---|---|---|---|
| २५ | ६ | नयते | तुनयेत् |
| ” | १८ | सूनुमाशु | सूनुराशु |
| ३१ | ४ | माप्नुयुरशेष | मापुरिति सर्व |
| ” | ५ | कियनेदह | कियदनेह |
| ३२ | ६ | फण | पण |
| ” | ११ | फणेषु | पणेषु |
| ३३ | १९ | पचितं | पचितिं |
| ३७ | १४ | समभिदां | समभिधां |
| ३९ | १६ | राजित्रै | राजवरै |
| ४१ | ११ | असाय | आसाय |
| ४३ | १८ | स्नानाय्या | नानाय्या |
| ५१ | १६ | जनयते दुःख | तिस्मोत्कटशुभम् |
| ५५ | ७ | जन्वातत | जान्वातत |
| ५६ | १ | न्त्रयमहम् | न्वहमयं |
| ५६ | ८ | भिदमदात् | भिधमधात् |
| ५७ | ५ | विशेश | विवेश |
| ५८ | १ | सर्वसम्पदो | सर्वलक्ष्म्यो |
| ” | ५ | पदादिभिः | पदाभिः |
| ६१ | ६ | विशिष्मिये | विसिष्मिये |
| ” | २० | गरीयसी | ऽतिगुर्वी |
| ” | २२ | तेजश्विनो | तेजस्विनो |
| ६३ | २ | प्रसादादिवाति | प्रसादतो यथा |

| पत्रं | पंक्तिः | अपाठ्यम् | पाठ्यम् |
|---|---|---|---|
| ६४ | १२ | हप्तचित्ता | नप्तचित्ता |
| ,, | १७ | महत्सङ्क | महत्सङ्ग |
| ,, | २० | प्रियो | श्रियो |
| ७४ | ११ | दुर्गाधिक | दुर्गादिक |
| ७८ | ८ | प्रीतिस्त्वध | प्रीतिस्त्वद |
| ८३ | ८ | द्भृशम् | द्भृशम् |
| ८४ | २० | रुत्सहतो | रुत्साहतो |
| ८९ | १ | ङ्गाल्तो | लाङ्गल्तो |
| १०० | १ | पिपृगृहे | पितृगृहे |
| १०४ | १७ | प्रजावासा | व्रजावासा |
| ११२ | ३ | शिरशि | शिरसि |
| ,, | ,, | द्युपततो | द्युपदतो |
| ,, | ५ | घोराम्वाजि | घोरास्वाजि |
| ११९ | ९ | कल्युतुं | कलयितुं |
| १२४ | ७ | समस्मा | समस्ता |
| १२५ | १२ | शिरशि | शिरसि |
| १३२ | ५ | शुमेरु | सुमेरु |
| ,, | १६ | द्दग्ग्रुणिन | द्दग्गुणिन |
| १३४ | १ | ध्याशितुं | ध्यासितुं |
| १३५ | २ | मक्षामहो | महामहो |
| ,, | ३ | मिति ब्रुवन्ते | मिति तु ब्रुवन्ते |
| १३६ | २ | सुतारकं | सुतारिकां |
| १४१ | २० | वृाण्यन्ध | वृष्ण्यन्ध |